# स्पन्दप्रदीपिका

# Spandapradīpikā

## A Commentary on the Spandakārikā
by
Bhagavadutpalācārya



Edited by
**Mark Dyczkowski**



# स्पन्दप्रदीपिका

# Spandapradīpikā

## A Commentary on the Spandakārikā
## by
## Bhagavadutpalācārya

Edited by

**Mark Dyczkowski**



### *Prefatory Remarks*

Although Bhagavadutpala's commentary on the *Spandakārikā* called *Spandapradīpikā* was edited and printed for the first time as far back as 1898 (see below), many uncertain readings remained in the printed edition. I have translated this text in its present edited form along with a short commentary by Kallaṭabhaṭṭa, simply called *vṛtti* and Rājānaka Rāma's extended commentary known as the *vivṛti* or *Spandārtha-sūtrāvalī*. These commentaries along with Kṣemarāja's *Essence of Vibration (Spandasaṃdoha)* have been prepared for a forthcoming book entitled *The Stanzas on Vibration*. This work is now complete and is due to be published by the State University of New York Press, Albany, U.S.A. in the near future. My translation contains extensive notes and expositions of each of the fifty odd verses of the *Stanzas on Vibration (Spandakārikā)* and the commentaries I have translated along with it. There is no need to add anything more here but simply refer the reader to thatwork.

### *Materials Used for this Critical Edition*

In making this critical edition I have used as my base the printed edition of the text published in the *Tantrasaṃgraha* vol. I, Yogatantragranthamālā no. 3, pp. 83-128 edited by Gopinātha Kavirāja, Banares, 1970. In fact, this is simply a reprint of the text edited by Vāmana Śāstrī and published in Islamapurkara in 1898. In the critical apparatus this source is labelled 'P'. I compared this text with the following four manuscripts.

S'1– This is a Śāradā manuscript. The text is written in black ink on paper and is bound together between thin-red leather covers along with a few other short Kashmiri Śaiva works. The writing is small and the fourtythree folios over which the text extends measure approximately four by five inches. The text is complete. The manuscript is deposited in the Central Library of Banaras Hindu University and is numbered C 4739.

S'2– This is another Śāradā manuscript. It is deposited in the Bhandarkar Oriental Institute, Poona and catalogued as number 173 of

1883-84 (section 1). The text is neatly written and laid out in two blocks on each sheet. They are about six inches in length and three inches broad. It is seventynine folios long and the text breaks off just before the end.

D1– This is a Devanāgarī manuscript deposited in the Bhandarkar Oriental Institute, Poona. It is twentysix folios long measuring approximately eight by eleven inches and there are twentythree lines to a page. It appears to be a relatively recent transcript. The text is complete. The manuscript is numbered 809 of 1891-95.

D2– This is another Devanāgarī manuscript wrongly described as being in Śāradā script in the catalogue. It is deposited in the Central Library of Banaras Hindi University and is numbered C 64. It consists of seventythree sheets of paper measuring approximately five by four inches. The writing is clear and the text is surrounded by a gold border about a quarter of an inch thick held in by straight black lines on both sides. There are ten lines of text on each side of the paper and it breaks off just before theend.

The two Devanāgarī manuscripts generally contain more variants as compared to the printed edition but these are in many cases to be attributed to scribal error. This is as one would expect in so far they are certainly derived from original Śāradā sources. Not infrequently, the Devanāgarī manuscripts agree more closely with each other than with the Śāradā ones. D1 has more independant readings than D2 and the Śāradā manuscripts. Of the two Śāradā manuscripts S'1 has more variant readings than S'2. The variants in S'1 are more often idiosyncratic readings than those of S'2 although, not infrequently, it agrees with one or other or both of the Devanāgarī manuscripts.

# स्पन्दप्रदीपिका

## उत्पलाचार्यविरचिता

[1][2]यत् [3]परापरभूस्पर्शि यत्सङ्कल्पाल्लयोदयौ ।
स्पन्दसंज्ञं ज्ञरूपं तच्छक्तीशं स्वबलं नुमः ॥

नत्वा[4] विकल्प[5]विलसत्सतत्स्वभावगुरुं गुरुम् ।
भुक्तिमुक्त्यै[6] युक्तियुक्तं किञ्चिद्व[7]च्म्यर्थितोऽर्थिभिः ॥

ज्ञानान्तराणि सन्त्याशु[8] नात्यन्तसुखदानि तु ।
मुक्तात्मज्ञानममृतं सुरसेष्विव[9] मृत्युजित् ।

चिन्तामणिस्त्वेक एव सगुणेषु[10]मणिष्विव ।
तेजस्विषु यथैकोऽर्को[11] निःशेषध्वान्तहा तथा ॥

नारायणस्थानसंस्थद्विजवर्यात्त्रिविक्रमात् ।
जातो जनानुग्रहार्थं व्याख्याति स्पन्दमुत्पलः[12] ॥

मायाश्यामतमश्छन्न[13] आत्मचिन्तामणिर्यतः ।
न दृश्यतेऽतस्तत्प्राप्त्यै ग्राह्या स्पन्दप्रदीपिका ॥

अयमत्र किलाम्नायः सिद्धमुखेनागतं रहस्यं यत् ।
तद् भट्टकल्लटेन्दुवंसुगुप्तगुरोर[14]वाप्य शिष्याणाम् ॥

अवबोधार्थमनुष्टुप्पञ्चाशिकयाऽत्र सङ्ग्रहं कृतवान् ।
यदपि तदर्थो व्याख्याज्योत्स्नाप्रकटीकृतोऽस्ति[15] तेनेषत् ॥

मोहनिशामध्यगता मन्ददृशस्तदपि नार्थमीक्षन्ते[16] ।
सूक्ष्मं दीपिकयाऽन्ते [17]स्वतस्तदुद्दीपनार्थमहमद्य ॥

---

१. D1, S'2 add ॐ श्रीगणेशाय नमः, D2 adds ॐ स्वस्ति श्रीगणेशाय नमः २. S'2 ॐ ३. D2 सापर० ४. D1 नुत्वा ५. D1, D2 ०विकसत्० ६. D2 ०मुक्य ७. D1 ०व्यर्थितो ८. D1 सत्याक्षु ९. D2 सुरसष्विव १०. P, D2 सगुणेष्व० S'1 सगुणे ११. D1 यथैर्को १२. D2 ०मुत्पन्नः १३. D1 ०तनुश्छन्न १४. D1 ०वसगुप्त० १५. D2 ०प्रकत्यस्ति १६. D1 मीक्ष्यन्ते D2 ०मुक्षन्ते १७. S'2 हृत० D1 हृत० ।

स्वोद्यन्तृतः[१] स्वरूपस्पन्दोल्लासेन चोदितश्च यदा ।
परवश इव प्रवृत्तस्तदा न गर्वान्मयेयमारब्धा ॥

( कलापकोऽयम् )

अत्रादौ तावत्सम्बन्धाभिधानाभिधेयविषयप्रयोजनप्रयोजनप्रयोजनानीति षडुच्यन्ते । यतस्तैर्विना श्रोतृणां शास्त्रं प्रत्यनादर[३] एव स्यादप्रयत्नश्च । इहैवोक्तं हि—

प्रयत्नेन परीक्ष्यं तत्त्वमादरादिति[४]

[५]शास्त्रमन्तरेण च हेयोपादेयविचारमात्रमपि न भवेत्[६] किं पुनस्तत्त्वपरीक्षणम् । तथा चोक्तमागमरहस्यस्तोत्रे—

साक्षाद्भवान् यदि विधाय न मूर्तिमाद्यां
तत्त्वं निजं तदवदिष्यदतोऽतिगुह्यम् ।
नाज्ञास्यत त्रिभुवनं[७] ध्रुवमन्धमूक-
कल्पं समस्तमसमञ्जसतामयास्यत्[८] ॥

[९]षाड्गुण्यविवेकेऽपि[१०]—

साक्षात् त्वमेव वा शास्त्रं त्वदीयैव हि सा मतिः ।
शब्दद्वारेण सङ्क्रम्य संस्करोत्यधिकारिणः ॥

[११]पञ्चरात्रश्रुतावपि—

यद्वत् सोपानेन प्रासादमारुहेत् प्लवेन वा नदीं तरेत् तद्वच्छास्त्रेणैव हि भगवाञ्छास्ताऽवगन्तव्य इति ।

तत्रामीषां शास्त्राणां सम्बन्धस्तावत् पञ्चविधः । परो महान् दिव्यो दिव्येतर इतरेतरश्चेति । तत्रेह सिद्धपुरुषयोः प्रायेण दिव्येतरः । अथ वाच्यवाचकलक्षणः । [१२]वाच्योऽर्थः । वाचकं शास्त्रम् । स्पन्दाभिधोऽर्थोऽत्र[१३] वाच्यः[१४] । तद्वाचकत्वादुपचाराच्छास्त्रस्या[१५]प्येतत्संज्ञा[१६] । स्पन्दशब्दस्यार्थो यद्यप्याद्यश्लोके युक्त्यैवोक्तस्तथापि धात्वर्थेन सहोच्यते ।

[१७]स्पदि किञ्चिच्चलने इति ।

---

१. S'2 स्वोद्यन्तृता D1 स्वयंतृता P,D2, सम्बन्धाभिधेयविषयप्रयोजनप्रयोजनानीति D1 ०भिधेयप्रयोजनानीति ३. S'1 प्रत्यादर एव न ४. D1, D2 ०इति omitted ५. S'1, शास्त्रन्तरेण ६. P, S'1, D2 add daṇḍa ७. S'2, त्रिभुवनेनं ८. S'1 ०स्यात् ९. D2 षड्गुण्य० १०. D2 विवेकोपि ११. S'1 पाञ्च० १२. S'1 adds इह, १३. S'1 ०भिधोर्थोयं: D1 ०मिधानोत्र १४. D1 वाच्योर्थंस्तद्व० १५. P, D2 ०त् स्पन्दस्या० १६. D1 ०पीयं संज्ञा १७. S'1 स्पन्दरि ।

स्पन्दनात् स्पन्दः। स्पन्दनं [1]निस्तरङ्गस्यास्य तावत् परमात्मनो युगपन्निर्विकल्पा या[2] सर्वत्रौन्मुख्यवृत्तिता। तस्मात्—

शान्तषाड्गुण्यरूपस्य यः[3] स्फुरन् [4]प्रतिभोदयः।
स चाऽऽत्मबलशक्तीशश्चिद्रूपः स्पन्दसंज्ञकः॥

अतश्चाऽस्मत्पितुर्मातामहाचार्येण [5]महाबलेन—

यथार्थनाम्ना[6] क्रोधे

इत्यादिनाक्तो विभवोदयो[7] रहस्यस्तोत्रे। उक्तं चेश्वरप्रत्यभिज्ञायाम्—

या चैषा प्रतिभा तत्तत्पदार्थक्रमरूषिता[8]।
अक्रमानन्तचिद्रूपः प्रमाता स महेश्वरः॥
व्यापकत्वात्स सामान्यः सर्वसाधारणादपि।

अस्य[9] च—

स्पन्दः सामान्यपूर्वश्च[10] शुद्धात्मा शङ्करः शिवः।
भावः स्वभावस्तत्त्वं च ज्ञातेत्याद्यभिधाः स्मृताः॥

अन्यच्च, चित् संविज्ज्ञानं बोधश्चेति पर्यायाः[11]। एष एव निरावरणचित्स्वरूपत्वाद् दिक्काला[12]द्यनवच्छिन्नप्रसरोऽद्वितीयः स्वानुभवैकप्रमाणः शक्तिचक्रेश्वर आत्मचिन्तामणिरुपेयतयाऽभिधेयः। कुतोऽस्य चिन्तामणित्वमिति चेत्। शास्त्रात्। श्रीपौष्करायां ह्युक्तम्—

चिन्तामणौ स्वरूपेण न किञ्चिदुपलभ्यते।
अथ चाभिमतं सूते ब्रह्मैवं सर्वशक्तिकम्[13]॥

परमार्थसारे च—

सर्वाकारो भगवानुपास्यते येन येन भावेन।
तं तं भावं भूत्वा चिन्तामणिरिव समभ्येति॥

ज्ञानसम्बोधेऽपि—

स्वभावादेकरूपापि नानात्वं प्रतिपद्यते।
ज्ञानस्य शक्तिः[14] सङ्कल्पैर्लक्ष्मीश्चिन्तामणेरिव॥

---

१. P, S'1 add च २. S'2 विकल्पया ३. P, D2 यत् ४. S'2, D1 स्फुरत्प्र० ५. D1 ०महाचार्यमहाबलेन D2 ०महाबलेन S'1 ०महाचार्येण बलेन S'2 ०महाचार्यमहाबलेन ६. P, S'1 D2 ०नाम्नः ७. D1 omits ०ोदयो ८. D1 ०दुषिता ९. S'1 omits च and makes अस्य part of the verse १०. S'1 स्तुपञ्च० ११. D1, S'2, पर्यायः १२. D1 ०कालाय० १३. D1 ०शक्तिमत् १४. D1 सिद्धिः।

अस्य च शास्त्रकारेणान्वर्थसंज्ञयाऽऽत्यन्तिकश्रेयस्करत्वाच्छिवशङ्करशब्दाभ्यां निर्देशः कृतः। वस्तुतस्तु[1] निर्नामक एव [2]। प्रोक्तं [3]चसिद्धनाथेनाभेदार्थकारिकास्विदम् —

[4]वस्तुनो भावशून्यस्य त्वग्राह्यस्य[5] निराकृतेः।
कल्पनामात्रमेवैतत् यच्छिवव्यपदेशनम् ॥
नेत्थं विभोर्विवर्तोऽस्ति परिणामश्च न क्वचित्।
अथवा द्वयमप्यस्तु तथाप्यस्य न खण्डना ॥

संवित्प्रकाशेऽपि[6]—

इति [7]निर्मलबोधैकरूपे [8]देहपरिग्रहः।
विवर्तपरिणामाभ्यां द्वाभ्यामप्युपपद्यते[9] ॥[10]
[11]विवर्तेऽप्यतथारूपस्तथा भासि [12]त्वमच्युत।
परिणामे स एव [13]त्वं सुवर्णमिव कुण्डले ॥

ननु कथमस्य निरावरणत्वं यतः सुखदुःखमोहात्मकगुणादिस्पन्दनिष्यन्दै[14]रावृतमेव पश्यामः। अत्रोच्यते। एते हि ज्ञेयत्वात् स्वयं निःसत्ताकाः। ज्ञातृसंश्रयात्तु लब्धप्रतिष्ठा इवाप्रबुद्धबुद्धीनां[15] स्वं शुद्धबुद्धस्वरूपं विहायाहम्प्रत्ययेन कामकामात्तादात्म्यं[16] प्रतिपन्नानां निजधर्मैरधिवास्य[17] सङ्कोचरूपतामापादयन्त्यविद्यारूपत्वात्। न पुनः स्वस्वरूपस्थितानाम्। उक्तं चेहाग्रे—

गुणादिस्पन्द इत्यादि।

धातुसमीक्षायां च —

अविद्याशबलस्यास्य स्थितं मेयत्वमात्मनः।
गृहीतं न[18] निजं रूपं शबलेन तदात्मना ॥
सा चाऽनृतात्मिकाऽविद्या नानृतस्य हि वस्तुता[19]।
[20]नावस्तु वस्तुनो नाशं विकारं वा करोत्यतः ॥

---

१. S'2, D1 वस्तुतश्च २. P adds सः ३. P चैतत्सिद्धनाथेन अभेदार्थकारिकासु S'1 चैतत्त्वाभेदकारिकास्विदम् ४. S'1 वस्तुतो ५. S'2 ०ग्राह्य० ६. S'2 च ७. D1 निर्मूल० ८. D1 बोध० ९. D1, S'1, S'2 ०प्युपद्यते १०. S'1 omits entire section from संवित्प्रकाशेऽपि up to ०प्युपपद्यते ११. S'2, D1, D2 विवृताव० १२. D1, D2 तम० १३. D1 एवायं D2 एव तं S'1 एकत्वं १४. P, S'2, D2 निस्पन्दै० D1 निःस्पन्दै १५. D1 मतीनां १६. P, D1 ०कामात्तादाम्यं १७. P, S'1, D1 ०धिकस्य १८. S'1 न गृहीतं १९. S'1 वस्तु या २०. S'1 omitted.

नाच्छादितस्य तमसा रज्जुखण्डस्य विक्रिया ।
नाशो वा क्रियते यद्वत् तद्वन्नाऽविद्ययाऽऽत्मनः ॥

नाऽतः स्वतो न परतो बन्धोऽस्य परमात्मनः ।
बद्धोऽथाऽविद्यया जीवो मुक्तिस्तस्य हि तत्क्षये ॥

तत्त्वयुक्तौ च—

येन येन हि बद्ध्यन्ते जन्तवो रौद्रकर्मणा ।
सोपायेन[1] तु तेनैव मुच्यन्ते[2] भवबन्धनात् ॥

कुलयुक्तौ च—

प्राणिनां[3] पतनं येन तेनैवोत्पतनं स्मृतम्[4] ।
अज्ञत्वा[5] बद्ध्यते येन ज्ञात्वा[6] तेनैव मुच्यते ॥

तथा मयाऽपि—

सीदति येनैव जडः प्राज्ञस्तेनैव सन्तरति दुःखात् ।
पिण्डितमयोऽप्सु मज्जति तदेव पात्रीकृतं प्लवने ॥

गीतासु [7]चेदृगेवाऽत्र युक्त्योपायः प्रदर्शितः—

आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत् ।
तद्वत् कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी ॥

तथा—

रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥

अन्यच्च—

असंत्यक्तात्मभावानां विषयाननुगृह्णताम् ।
विज्ञातपरमार्थानां जीवतामेव मुक्तता ॥
ते [8]चैवास्यात्मनः स्पन्दो नटस्येवान्यरूपता ।

उक्तं[9] च योगिनाथेन श्रीतच्चिच्छक्तिसंस्तुतौ—

---

१. P, D2 सोपायो २. S'2 मुच्यते ३. D1 प्राणीनां ४. D1 भवेत् ५. P, S'1 अज्ञस्तु ६. P, D2 ज्ञान। ७. S'1 चेदृशेव ८. D1 ते सैव० S'1 तदैवं ९. D1 नुक्तं ।

तदेवं त्वत्प्रवृत्त्या त्वन्निवृत्त्या चोदयेतरे[1]।
जुषन्ते येन तत्त्वानि तान्यतः स्पन्द एव ते ॥

वैसादृश्येऽपि कार्यस्यास्यात्र दृष्टान्तमाह यत्।
ज्वलनाद् धूमोद्गतिरिव विविधाकृतिरम्बरे गता भाति।
तद्वद्विष्णोः सृष्टिः स्वभावजा[2] द्वैतरूपेयम् ॥

[3]प्राश्यानश्चिद्रसस्यौघः साकारत्वमुपागतः।
अवश्यायः प्रबोधार्के तूदिते [4]स्वस्वभावभाक् ॥

[5]इत्यलमतिविस्तरेण, ग्रन्थगौरवभयात्। इह[6] चैतदेवाऽऽसमाप्तेर्विचार्यते। उपायोपेयप्रतिपादनमेव शास्त्रस्य प्रयोजनम्। या तदवबोधादुपेयस्वरूपापत्तिः[7] स्थिरा तदेव प्रयोजनप्रयोजनमिति। अस्य चेदं दर्शनं स्वतन्त्रम्। प्रागुक्तोपपत्त्या सर्वशास्त्रसमुद्भूतं चाद्वैतप्रतिपादकत्वं[8] निर्बाधमेव। यतो विमर्शात्मस्पन्दभूम्युपारोहात् पश्यन्त्यादिक्रमेण [9]वाक्प्रसवलाभः। उक्तं च संवित्प्रकाशे—

संविन्मूलाद् [10]वर्णपणज्ज्ञानस्तम्भात् सरस्वती।
प्रागघोषा सनादाऽनु पुण्यतीर्था प्रवर्तते ॥

[11]त्वत्प्रवृत्ता[12] प्राणयति शक्तिः सा विश्वमोजसा।
प्रतियान्ती पुनस्त्वां[13] सा संकोचयति संभवम् ॥

कार्याऽनुरूपं सा रूपं तथा नामापि बिभ्रती।
निर्वाहयति विश्वस्मिंश्चित्रां यात्रां चराचराम् ॥

तद्विना च सर्ववादिनां सत्तैव नास्त्यतस्ते[14] निरस्ता एव स्थिताः। अत एवेश्वरप्रत्यभिज्ञायामादिसिद्धरित्युक्तम्—

---

१. D2 चोदश्यं S'1 दे दे दयेतरे S'2 चोदयतेतरे २. S'2 ०जद्वैत० ३. D1 आश्यानं D2 प्राश्यं न० ४. D1 स्वस्वरू१० D2, S'1 सस्वभाव० ५. D1 इत्यलं वि० ६. D1 इहैव ७. D1 स्वस्वरूप० ८. S'2 ०प्रतिप्रतिपादकत्वं ९. D1 वाक्पसवं १०. P, D1, D2 वर्णरूपाज्ज्ञातस्तम्भात् S'1 वर्णाज्ज्ञाततस्मात् S'2 वर्ण × × ज्ञानस्तम्मात् This emendation makes more sense and agrees with both MSs of the Saṃvitprākas'a ११. P, D2 तन् १२. Printed edition and MSs read प्रवृत्या emended to प्रवृत्ता in agreement with MSs of the Saṃvitprākas'a १३. पुनस्त्वासां emended to पुनस्त्वां सा which reading agrees with MSs of the Saṃvitprākas'a १४. P, S'1 नास्ति। अतस्ते।

कर्तरि ज्ञातरि स्वात्मन्यादिसिद्धे महेश्वरे।
अजडात्मा निषेधं वा सिद्धिं वा विदधीत कः ॥ इति।

तदप्यत्र ये मोहाद्विप्रतिपद्यन्ते तेष्विदमापतितम्। यथा कश्चिन्माण्डलिको राजा चक्रवर्तिनः सकाशात्[१] किञ्चिच्चतुरङ्गादिसाधनं[२] प्राप्यानन्तरं साम्राज्यजिगीषया तेनैव सह युद्धं कर्तुमिच्छति, तदात्मविनाशायैव तस्य स्यात्। एवं तेषामपि तत्[३]। इत्थमप्यस्याजय्यत्वं[४] सिद्धमेवेति।

अथ संग्रहग्रन्थकृता समग्रमग्र्यग्रन्थार्थं गर्भीकृत्य ग्रन्थनिष्पत्त्यर्थमभिमत-[५] देवतां स्तोतुं यः[६] श्लोक उपन्यस्तस्तस्यार्थः प्राक् श्लोके ध्वनितोऽपि वितत्योच्यते—

**यस्योन्मेषनिमेषाभ्यां जगतः प्रलयोदयौ।**
**तं शक्तिचक्रविभवप्रभवं शङ्करं स्तुमः ॥ १ ॥**

तं भगवन्तं शङ्करं[७] स्तुमो नुमः। भोगापवर्गाख्यं शं श्रेयः सुखं वा करोतीति[८] शङ्करः। अमलः स्वस्वभावो य प्रागभिधेयतयोपात्तः[९]। इह हि जीवन्मुक्ततैव[१०] मोक्षः।[११] उक्तं चेहाग्रे—

इति वा यस्य संवित्तिरित्यादि[१२]।

तस्याश्चैतद्[१३] द्वयमप्यन्तःस्थम्। यतः[१४] सा ज्ञत्वकर्तृत्वभोक्तृत्वेश्वरतारूपा[१५] उक्तं चेह—

तदास्याकृत्रिमो धर्म इत्यादि

तथा—

यदा[१६] त्वेकत्रेत्यादि।

सर्वज्ञभैरवे च—

नान्यत्र गमनं[१७] स्थानं मोक्षोऽस्ति सुरसुन्दरि।
अज्ञानग्रन्थिभेदो[१८] यः स मोक्ष इति कथ्यते ॥

मोक्षधर्मेषु—

---

१. D1, S'2 का क्वा D2 adds का क्वा after सकाशात् २. D1 तुङ्गसाधनं ३. D1 S'2 omit daṇḍa ४. S'1 ०जय्यत्वमेवेति ५. D2 ०मिमतं ६. D1 यच्छ्लोक ७. Omitted in P, S'1 ८. D1, S'2 omit इति ९. D1 omits daṇḍa १०. D1 मुक्ततयैव ११. S'2 Omits passage from उक्तं to the following उक्तं १२. D1 adds क्रीडात्वेनाखिलं जगदिति १३. D1 तस्माच्च० १४. D1 यन्तः १५. S'1 यतस्सर्वज्ञत्वकर्तृत्वेश्वरतारूपा १६. S'1 यथा १७. S'2 गमन० १८. D1 ०रूपो।

चित्तमेव हि संसारो रागादिक्लेशदूषितम्[1]।
तदेव[2] तैर्विनिर्मुक्तं भवान्त इति कथ्यते ॥

बौद्धे च—

रागादिमलिनं[3] चित्तं संसारस्तद्विमुक्तता[4]।
संक्षेपात् कथितो मोक्षः प्रहीणावरणैर्जिनैः[5] ॥

नारदसंग्रहे च—

सर्वो विकल्पः संसारो नान्यो बन्धो विकल्पतः[6]।

ग्रन्थकर्तुश्च स्वस्वभावसम्बोधने—

बन्धनं बन्धकृद् बध्यस्त्रिष्वप्येको[7] न भिद्यते[8]।
स्वविकल्पकृतैर्बन्धैर्बद्धयते त्वनिशं[9] जगत् ॥

आत्मसप्ततौ च—

वस्तुस्थित्या न बन्धोऽस्ति तदभावान्न मुक्तता।
विकल्पघटितावेतावुभावपि न किञ्चन ॥

पञ्चरात्रेऽपि—

त्रिविधो दोषः— स्वभावजस्तामसो विकल्पजो राजस इत्यादि यावत्तेनैव देहेन वशीभवति भगवद्भूतस्तदा सर्वज्ञो भवति सर्वदर्शी सर्वेश्वरः सर्वशक्तिरित्यादि ।

अत एवाऽत्र भगवच्छब्दः प्रयुक्तः[10]। यतः—

ऐश्वर्यस्य समग्रस्य ज्ञानस्य[11] यशसः श्रियः।
वैराग्यस्य च मोक्षस्य षण्णां[12] भग इति[13] स्मृतः ॥
भगवद्व्यतिरेकेण[14] न च स्तुत्योऽस्ति मानिनाम्[15]।

तत्स्वरूपानुप्रवेश एव स्तुतिरत्र[16] त्वभिन्नत्वमेवाभिमतम्[17]। अन्यथा कः

---

१. P, S1 D2 ०भूषितम् २. D1 तदैव ३. D1 ०मखितं ४. P1 S'2, D2 ०द्विविक्तता Our reading agrees with TĀv I p. 64 ५. S'2 जिनैः ६. D1 विकल्पितः D2 विकल्पः ७. D2 ०प्येके ८. S'1, D1, D2 विद्यते ९. D1 त्वनिशं १०. D1 प्रयोयो ११. S'2 omits ज्ञानस्य १२. S'2 adds च १३. D1 इतीङ्गना १४. D1 ०द्व्यक्तिरे १५. D1 नामिनाम् १६. P adds daṇḍa १७. D1 स्वभाविता D2 स्वभिरतम् S'1 omitted.

स्तोता कः स्तुत्यः का वा स्तुतिर्यस्मात्—

विरुद्धमेतदद्वैतात् स्वच्छायोल्लङ्घनं यथा ।

उक्तं च—

वेद्यं स्वरूपतां नीत्वा यदा जानाति[१] वेदनम् ।
तदानीं वेद्यता का स्यात् का वा वेदनता परा ॥

केवलं त्वत्र शब्दकृतो भेदः । सोऽपि[२] विकल्पमूलत्वात्तेषाम् ।

उक्तं च—

विकल्पयोनयः शब्दा विकल्पाः शब्दयोनयः ।
यथा राहोः शिर इति धारा वा सविषो[३] यथा ॥

अन्यच्च—

यदभिन्नं स्वसंवित्तौ तत् परस्य यदोच्यते ।
[४]तद्भिन्नमिवाभाति शाब्दीं भूमिमुपागतम् ॥

तैश्च[५] विना व्यवहारोऽपि न निर्वहति । उक्तं [६]संवित्प्रकाशे—

वागेवास्याः कारणं विश्ववृत्तेर्न्याय्यं[७] चैतन्नागमः केवलोऽयम् ।
नासङ्कल्पं किञ्चिदस्तीह कार्यं वाचं विना न विकल्पोऽस्ति कश्चित् ॥

एषाऽपि बोधमूलेति प्रागेवोक्तम् । अन्यच्च जयाख्यसंहितायाम्—

निष्कम्पबोधसामान्यरूपो भूत्वा[८] पुरा स्वयम् ।
ये शब्दजनिता भावाः [९]सूक्ष्मसूक्ष्मतराऽखिलाः ॥

सामान्यबोधशब्दस्य पश्यतस्त्वेकतां गताः ।
यदाऽभिमुखमायान्ति सङ्कल्पाद्युत्थितस्य च ॥

शब्दरूपपदार्थस्य शब्दः स परमः स्मृतः ।
सङ्कल्पपदवीरूढः स्फुरत्यन्तः स्थितः स्फुटम् ॥

पदार्थोपरि यः[१०] शब्दो मध्यमं विद्धि[११] तं मुने ।
चिद्वायुकरणोत्थासु प्रयत्नपदवीषु च ॥

---

१. P, S'1, D2 जानन्ति our reading agrees with MSs of the Saṃvitprakās'a २. S'1 भेदः । भेदो S'2 भेदोपि, ३. D1 पयसो, ४. तदभिन्नम॰ emended to तद्भिन्नम् as the sense demands ५. P उक्तेर॰ D2 उक्तैर S'2 adds संकल्पैः after तैश्च ६. D1, S'1 add च, ७. D1, D2 ॰न्र्यायं ८. P मात्रा D2 मात्वा ९. D1 सूक्ष्माः १०. P, D2 ॰र्थोपरमः ११. D1 विदितं ।

वाच्यवाचकभावेनाऽभिव्यक्तः स्थूल उच्यते ।
दृश्यादृश्येषु भावेषु योऽभिव्यक्तिं प्रयाति च ॥
स तु स्थूलतरश्चैव व्यवहारेऽखिले स्थितः ।

अन्यत्रापि[१]—

शरीरजो वा शाब्दो वा मानसो वा समुद्गतः ।
व्यवहारोऽप्यसौ नास्ति यत्र त्वं नाथ नाग्रगः[२] ॥

इत्युपपन्नमेतत् । तं स्तुम इत्युक्तम् । तं कम् ? यदुन्मेषादौन्मुख्याज्जगतो विश्वस्योदयः प्रभवः सन्ततिरिति[३] यावत् । निमेषाद्विश्रामात् प्रलयोऽप्ययः । न ह्येतद्व्यतिरिक्तस्य जगतोऽस्त्युदयोऽप्ययो वा ।

किन्त्वीशशक्तिप्रसरविरामौ प्रभवाऽप्ययौ ।

[४]सिद्धोक्तं च—

समुदेति जगदशेषं तवोदय[५]विमलसंविदाकारे ।
अस्तं याति समस्तं पुनरपि निजरूपरूढायाः ॥ इति ।

ग्रन्थकृताप्युक्तं तत्त्वविचारे—

शक्तिप्रसरसङ्कोचनिबद्धावुदयव्ययौ ।
यस्यात्मा स शिवो ज्ञेयः सर्वभावप्रवर्तकः ॥

कक्ष्यास्तोत्रेऽपि—

त्वदाशयोन्मेषनिमेषमात्रमयौ जगत्सर्गलयावितीदृक् ।
स्फुटे स्फुटं त्वन्महिमाऽवभाति विचित्रनिर्माणनिदर्शनेन ॥

ज्ञानक्रियादिगर्भेच्छाशक्तियं:[६] प्रसरात्मकः ।
सङ्कल्पोक्तः[७] स उन्मेषः प्रोक्तो ह्येतत् स्वतन्त्रके ॥

यत्र यत्र भवेदिच्छा ज्ञानं तत्र प्रवर्तते ।
क्रियाकरण[८]संयोगात् पदार्थस्योदयो भवेत् ॥

तद्विरतिश्च निमेषः । उदयप्रलयाविति [९]वक्तव्ये प्रलयोदयाविति यदुक्तं तद्वृत्तभङ्गभयात् । विपर्ययेण[१०] चोन्मेषशब्दस्य मङ्गलार्थत्वादादिप्रयोगः सृष्टेश्चाद्यत्वात्[११] ।

---

१. D1 adds च, २. S'1 नाग्रगं ३. S'2 omits ०रिति ४. P इति सिद्धम् । उक्तं S'1 adds इति before सिद्धोक्तं ५. D1 ०विलय० ६. D1 ०शक्तेयं: ७. D1 सङ्कल्पोन्त: ८. S'2 ०कारण० ९. D1 वक्तव्यो १०. D1, D2 विपर्यये ११. D1 ०चायत्वात् ।

यस्माद्वस्त्वभिधेयं नातः शब्दक्रमेऽत्र [1]भवबन्धः ।
तत्पक्षो नीचः स्याद्ये तु ब्रुवते यथासंख्यम् ॥

आभ्यामस्य जगत्सृष्टिसंहारयोः कारणभावः प्रोक्तो भुक्तिमुक्ती च । तत्रोन्मेषाद्भोगो नानाविधः । निमेषान्मोक्षो निस्तरङ्गरूपता । अन्यच्च[2] । तं[3] किंभूतम् शक्तिचक्रविभवप्रभवमिति[4] ।

इच्छाख्यैका विभोः शक्तिः प्राग्द्विधा[5] ज्ञक्रियाभिदा[6] ॥ इति ।

तन्नानात्वं चक्रशब्देनोक्तम् । तदुक्तं मालिनीविजये—

या सा शक्तिर्जगद्धातुः कथिता समवायिनी ।
इच्छात्वं तस्य सा देवी[8] सिसृक्षोः प्रतिपद्यते[9] ॥
सैकाऽपि सत्यनेकत्वं यथा गच्छति तच्छृणु ।
एवमेतदिति ज्ञेयं नान्यथेति सुनिश्चितम् ॥
ज्ञापयन्ती जगत्यत्र ज्ञानशक्तिर्निगद्यते ।
एवं भवत्विदं सर्वमिति [10]कार्योन्मुखी यदा ॥
जाता तदैव[11] सा तत्तद्वत्कुर्वन्त्यत्र[12] क्रियोच्यते ।
एवमेषा द्विरूपाऽपि पुनर्भेदैरनेकताम्[13] ॥
अर्थोपाधिवशाद्याति चिन्तामणिरिवेश्वरी ।
तत्र मातृत्वमापन्ना पञ्चाशद्वर्णमालिनी ॥ इति ।

शक्तीनां चक्रं शक्तिचक्रं मातृवर्गस्तच्च[14] मुख्यं चतुर्विधम् । उक्तं च—

खेचरी गोचरी चाऽथ दिक्चरी भूचरी भिदा ।
परादिभारतीसंस्थं शक्तिचक्रं चतुर्विधम् ॥

तथा—

आनन्देच्छा ज्ञ-क्रियाख्यं[15] खेचर्याद्यं चतुष्टयम् ॥ इति ।

तस्य यो विभवो विभूतिर्विस्तरो[16] वा तस्याऽपि प्रभवम् । प्रभवत्यस्मादिति

---

१. D1 भर० २. S'2 omits daṇḍa ३. D1 omits तं ४. D2, S'2 omit इति ५. D1 प्राग्विधा ६. D1 ०भिधा ७. D1 तन्नानत्वां चक्र० S'2 तन्नानात्वाच्छक्र० ८. S'2 देवि also ptd. edn. of the MVT and quoted passage in Sp. kā. vi. p. 148 read देवि, ९. D1 परमात्मनः १०. D2 एवं भवत्विदं सर्वमिति कार्यो० ११. D1 तथैव १२. P, D2 तद्वत् कुर्वन्त्यपि S'1 तत्तद्यत्कुर्वन्त्यत our reading agrees with that of the ptd. edn. of the MVT. १३. D1 ०नन्तताम् १४. P, D2 add daṇḍa १५. S'1, D1 ०स्थं १६. D1 विस्तारो ।

प्रभव उत्पत्तिस्थानम् । यतः सर्वासां शक्तीनां सस्फारचिच्छक्त्यवगमनाच्छक्तित्वम् । सा च तदभिन्नैव । प्रोक्तं हि श्रीजयायाम्—

तत्त्वनिर्मुक्तदेहस्य केवलस्य चिदात्मनः ।
य उदेति महानन्दः सा शक्तिर्वैष्णवी परा ॥ इति ।

विष्णुयामले च—

पाहि पाहीति वचनात्तत्त्राणात्तस्वविग्रहाः[१] ।
परापरबलस्पर्शात्[२] स्वस्वरूपसमाश्रयात् ॥
निहता[३] दानववराः परं वीर्यं प्रकाशितम् ।
तेन ता मातरः प्रोक्ता विश्वसम्भवकारणात् ॥ इति ।

अत एव ग्रन्थकारेणासां [४]विज्ञानदेहात्मकत्वमुक्तम् । अथवालमत्र[५] । किमनेनासां[६] रहस्यस्वरूपातिप्रकाशनेन[७] योगिनीनां मुखगतेन । शक्तयश्च खेचर्याद्या वेच्छाद्या वा पराद्या वा अघोराद्या वा वामाद्या वा ब्राह्म्याद्या वा अन्या वैष्णव-शैव-सौरबौद्धाद्युक्ता वा । अथवा शब्दराशिसमुत्थस्येत्यादिना । वक्ष्यमाणा अकाराद्यक्षररूपा करणरूपा[८] वा भवन्तु । एतावत् प्रयोजनमत्राभिर्यदासां[९] सर्वासां स्पन्दरूपो भगवानेव प्रभव[१०] इति प्रतिपादनम्[११] । तथा च[१२]मायांवामनसंहितायाम् —विष्णु-शिव-सूर्य-बुद्धादि[१३]रूपतया तत्तच्छक्तिचक्रपरिवारयुतस्तत्कारणं भगवानेक एव ध्यानभेदेनोपास्यत्वेनाभिहितः । उक्तं च [१४]कुलयुक्तौ—

वेदान्ते वैष्णवे शैवे सौरे बौद्धेऽन्यतोऽपि च ।
एक एव परो ह्यात्मा[१५] ज्ञाता ज्ञेयं महेश्वरि ॥

अन्यच्च—

यस्योन्मेषनिमेषाभ्यां जगतः प्रलयोदयौ । तं [१६]स्तुमः

इत्येतावता सर्वमुक्तं स्याज्ज[१७]गत्यन्तस्फुरणाच्छक्तिचक्रस्य । उक्तं हि रहस्यशास्त्रेषु—

शक्तिश्च शक्तिमांश्चैव पदार्थद्वयमुच्यते ।

---

१. D1 ०त्राणात्तु० D2 ०त्राणात्त्व० २. D1०स्पर्शा ३. D1 निहिता ४. S'1 संविज्ञान० ५. S'1 अथालम् ६. D1 ०सां omitted S'1 ०:सौ ७. S'1, S'2 प्रकाशेन ८. D1 कारणरूपा ९. S'1 व्यासां १०. S'2 प्रभवयनि ११. D1 प्रतिपादितम् १२. S'2 मया १३. S'2 ०धि० १४. D1 कल० १५. P परः स्वात्मा १६. D2 omits तं १७. P स्यात् अत्यन्तं ।

शक्तयश्च जगत् सर्वं[1] शक्तिमांस्तु महेश्वरः ।। इति ।

यत्तु शक्तिचक्रविभवप्रभवमिति पदमुपन्यस्तं[2] तदुद्देशार्थम् । साभिप्रायत्वान्महाकवेः । उक्तं च ध्वनौ—

प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।
यत्तत् प्रसिद्धावयवातिरिक्तमाभाति[3] लावण्यमिवाङ्गनासु ।।

तेनैतदेव[4] शक्तीनां यतो[5]ऽन्तःप्रसरोदयौ ।
तद्बलालम्भनात्तासां[6] प्रभुत्वं प्राप्यतेऽचिरात् ।।

उक्तं चेह—

अपि त्वात्मबलस्पर्शात् पुरुषस्तत्समो भवेत् ।[7] इति ।
यदिदं पदमग्रेऽस्ति परीक्ष्यं तत्त्वमादरात् ।
इतः प्रभृति सर्वत्रेहानुयोज्यं[8] तु तद्बुधैः ।।

इति ।। १ ।।

ननु [9]संसार्यवस्थायां कथं [10]शङ्करताऽऽत्मनि[11] ।
इत्याशङ्कोत्थदुर्दोषपरिहाराय तूच्यते ।।—

**यत्र स्थितमिदं सर्वं कार्यं यस्माच्च निर्गतम् ।**
**तस्यानावृतरूपत्वान्न निरोधोऽस्ति कुत्रचित् ।।२।।**

यत्र यस्मिन् स्पन्दतत्त्वे इदं सर्वं जगल्लक्षणं कार्यं[12] ज्ञानरूपतया शक्त्यात्मना स्थितं निमेषावस्थायां [13]सत्कार्यत्वात् । यस्माच्च निर्गतमभिव्यक्तं गतमुन्मेषावस्थायां तस्यानावृतरूपत्वाद् बोधरूपतयाऽनाच्छादितस्वभाव[14]त्वाद्धेतोर्न कुत्रचिन्निरोधोऽस्ति । यतो बोध्यस्य[15] स्वयं सत्तैव नास्त्यतो[16] बोधरूपमनावृतमेवावस्थाद्वयेऽपि । उक्तं च—

यथा हेम्नो रूपकेषु वैचित्र्यं स्वापरिच्युतेः[17] ।

---

१. D1 शक्तयोस्य जगत्कृत्स्नं २. D1 ०मित्युपन्यस्तं ३. D1 ०रिक्तं विभाति ४. D1 तेनैतदेवं ५. D1 लयो० ६. D1 ०लम्ब० ७. S'2 omits daṇḍa ८. S'2 ०पद० ९. P ०संसर १०. P तस्करता० D2 शस्करता ११. D1 ०त्मनः १२. P omits कार्यं १३. P, D2 omits सत्कार्यत्वात् । यस्माच्च निर्गतमभिव्यक्ति गतमुन्मेषावस्थायां १४. ०स्वरूपत्वा० १५. P, D1 बोधस्य S'1 वेद्यस्य १६. P नास्ति । अबोधृ S'1 नास्ति ते बोधृ० S'1 omits following words up to the verse beginning with यथा १७. P, S'2, D2 स्वान्न रिच्यते ।

अथ नित्यस्वरूपस्य तथा ते विश्वरूपता ॥
यथा गलितरूपस्य हेम्नः पिण्डात्मना स्थितिः ।
तथा गलितवेद्यस्य तव शुद्धचिदात्मता[१] ॥

ज्ञानसम्बोधेऽपि—

विश्वस्याश्रय आकाशं न विश्वं नभसो भवेत् ।
ज्ञानं नभ इवानन्तं ज्ञेयं विश्ववदल्पकम् ॥
आकाशस्य यथान्येन[२] प्रतिबन्धो न केनचित् ।
व्यापित्वात् तद्वदस्याऽपि ज्ञानस्याऽप्रतिबन्धता[३] ॥

इति ॥ २ ॥

सर्ववृत्त्युपसंहारे[४] निरोधो[५] मास्तु तस्य तु ।
जाग्रदाद्यास्ववस्थासु कुतः स्यादनिरुद्धता ॥—

**जाग्रदादिविभेदेऽपि तदभिन्ने प्रसर्पति ।**
**निवर्तते निजान्नैव स्वभावादुपलब्धृतः ॥ ३ ॥**

जाग्रदादिविभेदे प्रसर्पति प्रसरत्यपि सति तत्[६] स्पन्दतत्त्वं निजादात्मीयात् स्वभावादुपलब्धृरूपात् स्वसंवित्स्वरूपान्नैव[७] निवर्तते ।[८] कुतः उपलब्धृतो हेतोर्वा । यस्मादुपलब्धृरूपत्वं[९] तिसृष्वप्यवस्थासु साधारणम् । उक्तं[१०] च—

अवस्थास्वेव भेदोऽयं नावस्थातुः कदाचन[११] ।
यथा [१२]विषस्याङ्कुरादौ [१३]तच्छक्तेर्न तु भिन्नता ॥ इति ।

जाग्रत्स्वप्नयोस्तावत्संवेदनं[१४] सर्वेषां प्रसिद्धमेव सुषुप्तेऽप्युत्तरकालं[१५] सुखमहमस्वाप्समित्याद्य[१६]ज्ञस्याऽपि संवेदनात् सवेत्ता [१७]निर्नष्ट एव[१८] । उक्तं च—

वेल्लत्सु प्रतिबिम्बेषु जलस्पन्दानुवर्तिषु ।
यथेन्दोर्न क्रियावेशस्तथाऽत्र परमात्मनः ॥

अन्यच्च, कीदृशे[१९] विभेदे विशेषेण भेदो विभेदस्तस्मिन्[२०] । किंभूते तदभिन्ने ।

---

१. D1 चिन्मात्ररूपता २. P, S'2, D2 आकाशस्येव वाऽन्येन ३. D1 •वन्धना ४. P, S'1, S'2, D2 •संहारो ५. S'2 निबोधो ६. S'1 शक्तितर्थ ७. S'1 •रूप• ८. S'1 daṇḍa missing ९. S'1 त्रिष्वप्य• १०. S'1 उक्तं च omitted ११. D1 कदाचनः १२. D1 वृक्षस्य• १३. D1 शच्छक्तेर्न १४. S'2 adds daṇḍa १५. P, S'1 सुषुप्तेरुत्तरं• १६. D1 •देर• १७. P, S'2, D2 निर्दिष्ट १८. P adds भवति १९. P, D'1, D2 omit कीदृशे २०. S'1 विशेषे भेदे विभेदे ।

तस्यैव ताद्रूप्येणावस्थानात् । तथा च—

अक्षैर्योऽर्थग्रहो द्रष्टुस्तज्जाग्रदिति कथ्यते ।
यत्तैर्विनार्थस्मरणं मनसा स्वप्नसंज्ञितम् ॥
यत्रार्थस्मरणं नास्ति तत् सौषुप्तमुदाहृतम्[१] ।
शुद्धबोधैकरूपो योऽवस्थाता सैव तुर्यता ॥

॥ ३ ॥

अवस्था एव [२]विश्वान्तर्नावस्थातेति ये जगुः ।
[३]प्रत्यभिज्ञादियुक्त्येयं तन्निरासाय कारिका[४] ॥—

**अहं सुखी च दुःखी च रक्तश्चेत्यादिसंविदः[५] ।**
**सुखाद्यवस्थानुस्यूते वर्तन्तेऽन्यत्र ताः स्फुटम् ॥ ४ ॥**

अहं सुखीत्यादि[६] याः[७] संविदः संवेदनान्यवस्थाः ।[८] ताः संविद्भ्योऽन्यत्र संवेत्तर्यवस्थातरि सुखाद्युपलब्धरि[९] उपरागतया स्फुटं कृत्वा वर्तन्तेऽवतिष्ठन्ते ।[१०] संवेत्तारं विना संवेदनस्याऽभावात् ।

नद्योऽब्धाविव तादात्म्यं तत्प्रविष्टाः[११] प्रयान्ति वा ।
क्षणिकज्ञानानां[१२] ह्येव[१३] न तु ता एव केवलाः ॥

यस्मात्—

कार्यकारणभावो हि बाध्यबाधकताऽपि च ।
पूर्वापरैकमातारमन्तरेण न[१४] सिद्ध्यतः ॥ इति ।

तत्र हि—

प्रामाण्यं क्षणिकत्वेन प्रत्यक्षेणोपपद्यते ।
[१५]प्राग्भाव्युत्तरज्ञानदार्ढ्यात्[१६] प्रामाण्यसिद्धितः ॥
प्रतिक्षणमथान्यत्वात्[१७] सामान्यस्याग्रहे सति ।
विलक्षणाः क्षणाः सर्वे प्रामाण्यं[१८] किं निबन्धनम् ॥

---

१. P, S'2, D2 ०र्थस्मरणे नस्तत् सौपुप्तमुदाहृतम् S'1 ०र्थस्मरणे न सुषुप्तेषु समुदाहृतम् D1 ०र्थस्मरणे नस्तस्तत्सौषुप्तमुदाहृतम् २. D1 विश्रान्त० ३. S'1 प्रत्यभिज्ञान० ४. S'2 कारिषका ५. D1 ०संविदुः ६. P ०द्याः ७. S'1 यस् ८. S'1, S'2 omit daṇḍa ९. S'2 adds daṇḍa १०. S'1 omits daṇḍa ११. D1 तत्प्रातिष्ठा १२. P, S'1, S'2, D2 ०ज्ञानिनां D1 ज्ञानिनामेव emended to ०ज्ञानानां १३. S'1, S'2 हीव १४. P, D2 प्र० D1 omits न १५. P, D2 प्राग् भावादु० १६. S'1, S'2 ०विज्ञान दार्ढ्यात् १७. D1 ०न्यस्यात् १८. P, S'1 प्रामाण्ये ।

सम्बन्धस्याग्रहश्चापि[१] तेन मानस्य का गतिः ।
मिथ्याज्ञानस्य मिथ्यात्वं ब्रूहि वा किंनिबन्धनम् ॥[२]

क्षणान्तरे शुक्तिकायां रजतं[३] केन वार्यते ।
भिन्नज्ञानस्य कर्तृत्वे सर्वं प्रामाण्यमाप्नुयात् ॥

अन्यस्वरूपसंसिद्धावन्य[४]सिद्धिर्भवेद्यदि ।
घटस्वरूपसंसिद्धौ पटस्यावगमो भवेत् ॥

योऽयं स एवायमिति प्रत्ययः स्थिरकालजः ।
कर्तुं शक्यो न [५]तद्बाधप्रामाण्यात् क्षणिकैस्ततः ॥

प्राग्विज्ञानस्मृति प्रत्यभिज्ञा नित्यं[६] प्रतिष्ठिता ।
अतो नित्यस्वभावस्यैवात्मनः[७] कर्तृतोदिता ॥ इति ।

किं वा बहूक्त्या—

एकप्रमात्रभावात् स्यात् क्षणिकत्वादनिश्चयात् ।
प्रमाणमप्यप्रमाणं[८] बौद्धानां हि निराश्रयम् ॥ इति ।

उक्तं च बौद्धायनसंहितायाम्—

कार्यकारणभावस्तु नास्ति ज्ञाने क्षणक्षयः ।
क्षणं द्वितीयं [९]नास्तिचेत् स्मृतिबीजं कथं भवेत् ॥

जनकं तत् कथं नष्टमनष्टं [१०]वार्धनष्टकम् ।
नष्टस्य जनकत्वं चेदभावाद्भावसन्ततिः ॥

जनकत्वे त्वनष्टस्य क्षणभङ्गः प्रहीयते ।
द्वितीयं यत्क्षणं तिष्ठेत्तदास्ते शतमप्यथ ॥

[११]जनकत्वेऽर्धनष्टस्यार्धे[१२] नाऽभावमेति तत् ।
तस्माद्भावाः स्थिराः सर्वे न च्यवन्ते स्वरूपतः ॥

आत्मावबोधविषये सुस्थिराः[१३] क्षणिका[१४] न ते ।

---

१. D1 ०ाग्रहश्चापि २. This verse is omitted in D2 ३. S'1 omits रजतं ४. S'1, D1 ०न्या० ५. P, D2 तद्वादि० S'1 तद्बाधे S'2 तद्बाध्यो० D1 तद्बाधो० emended तद्बाध० ६. S'2, D1 नित्ये ७. D1 ०ात्मा ८. P, D1 add स्यात् ९. P, D2, S'1 S'2 नास्ते १०. P वाप्य० D2 वाव० ११. P, D2 ०र्थनिष्ठस्य S'1 ०र्थनष्टस्य S'2 ०वनष्टस्य D1 ०र्वनिष्ठस्य emended to र्धनष्टस्य १२. P, S'1, S'2, D2 ०र्थे १३. P, S'2, D2 स्वस्थिराः १४. S'1 क्षणिकास्सुषिराः ।

बाध्यबाधकभावोऽपि[1] न स्यान्निश्चायकं विना ।।
शुक्तौ हि रजतज्ञानभ्रान्तिभङ्गोऽस्ति नान्यथा ।
तस्माज्ज्ञानं नित्यमेकं[2] क्षणिकानि बहूनि नो ।। इति ।

सत्कार्यसिद्धौ च—

न हि [3]स्वनिष्ठै[4]र्विज्ञानैरितरेतरवेदनम् ।
तस्मात् पूर्वापरावस्था परिग्रहणपण्डितः[5] ।।
एकः प्रमाता चित्राभिर्वृत्तिभिर्व्यवहारभाक् ।

प्रत्यभिज्ञायां च—

एवमन्योन्यभिन्नानाम[6]परस्परवेदिनाम् ।
ज्ञानानामनुसन्धानजन्मा नश्येज्जनस्थितिः ।।
न चेदन्तःकृतानन्तविश्वरूपो महेश्वरः ।
स्यादेकश्चिद्वपुर्ज्ञानस्मृत्यपोहनशक्तिमान् ।।

गीतास्वपि—

मत्तः स्मृतिर्ज्ञानमपोहनं च

इत्यलं कुतर्काश्मनां चर्वणेन । अन्यच्च, किंभूते संवेत्तरि ? सुखाद्यवस्थासु[7] बोद्धृरूपतयाऽनुस्यूतेऽनुविद्धे । मणिषु सूत्रमिव सदानुस्यूते एव सर्वास्ववस्थासु । यस्माद्य एवाहं प्राक्सुखी स एवाद्य दुःखी[8] । आदिग्रहणाद्रक्तोऽहं विरक्तोऽहं मूढोऽहं प्रबुद्धोऽहं घनादिमानहमिति [9]स्मृतिप्रत्यभिज्ञानुसन्धानात् । नन्वेवमसौ सावरणः । नैतत्सत्यम् । विकल्परूपतया तासामनित्यत्वात् । तद्व्यतिरिक्तत्वाच्च संवेत्तुः[10] [11]तास्त्वविद्यावशा[12]दुपरागमात्रमस्य[13] । उक्तं च भर्तृहरिणा—

नाच्छादितस्य तमसा रज्जुखण्डस्य विक्रिया ।
नाशो वा क्रियते यद्वत्तद्वन्नाविद्ययाऽऽत्मनः ।।

संवित्प्रकाशे च—

अत्यन्ताच्छस्वभावत्वात् स्फटिकस्य यथा स्वकम् ।
रूपं परोपरक्तस्य नित्यमेवोपलभ्यते ।।

---

१. D2 ०भावे० २. S'1 नित्यमेव ३. P, S'1 D2 स्वनिष्ठे ४. P, S'1, D2 विज्ञाने ५. P, प्रमाणपरिपिण्डितः S'1 परिग्रहणपिण्डितः D2 परिपिण्डितः ६. S'1 ०परस्पर० ७. S'2 ०वस्थासु to यस्माद्य omitted ८. S'1 omits daṇḍa ९. S'2 adds daṇḍa १०. S'2 adds daṇḍa ११. P, S'1 D2 तास्व० १२. P ०वरणादु० १३. P, S'1, D1, D2 ०मात्रस्य ।

तथा भावसमासक्तं भगवंस्तावकं वपुः।
अत्यन्तनिर्मलतया पृथक्[1] तैर्नोपलभ्यते॥

नैतावताऽसौ स्फटिकः[2] पृथङ्नास्त्येव रञ्जकात्।
[3]भावरूपपरित्यक्ता तव वा निर्मला तनुः॥ इति

तथा—

उपरागेऽपि शुद्धत्वं न त्यक्तमनया प्रभो।
परित्यज्य निजं रूपं संविदाख्या कुतः [4]श्रयेत्॥

अथाऽप्राप्यैव तद्रूपं भवेद्रूपान्तरानुगा।
तद्रूपापि हि दृश्येत [5]कारणस्याऽपि सम्भवात्॥[6]

तथाऽत्रैव—

[7]सदैव शुद्धोऽनुभवोऽयं प्रत्याकारकर्बुरः।
[8]आकारान्तरसञ्चारकाले तस्यापि निर्मलः॥

यथा जात्या सितं वस्त्रं रक्तं रागेण केनचित्।
[9]तत्पदं प्राप्तशुक्लत्वं पुना रागान्तरं श्रयेत्॥

एवं शुद्धा चितिर्जात्या [10]यदाकारोपरागिणी।
तत्त्यागापरसञ्चारमध्ये शुद्धैव तिष्ठति॥

तथा—

नीले पीते सुखे दुःखे चित्स्वरूपमखण्डितम्।
विशिनष्टि विकल्पस्तच्चित्रयोपाधिसम्पदा॥
॥४॥

तद्व्यतिरिक्तस्य च रूपमाह[11]—

**न दुःखं न सुखं यत्र न ग्राह्यं ग्राहकं न च।**
**न चास्ति मूढभावोऽपि तदस्ति परमार्थतः॥ ५ ॥**

---

१. D1 पृथक्तेऽतो २. D1 स्फुटिकः ३. D1 भावरूपं ४. P S'1' D2 कुतश्च यत् ५. P, S'1, D1, D2 कारणेऽस्याऽपि our reading agrees with the MSs of the Saṃvitprakāśa ६. S'2 adds: स्फटिकस्य यथा स्वकम् रूपं परोपरक्तस्य नित्यमेवोपलभ्यते। तथा भावसमासक्तं भगवंस्तावकं वपुः। अत्यन्तनिर्मलतया ७. D2 सदेव ८. D1 अकार॰ ९. P तत्पद॰ D1 तत्परं १०. D1 ॰कार्यो ११. S'1, omits च रूपमाह।

तत् स्पन्दतत्त्वं परमार्थतोऽस्ति नित्यत्वात्तस्य । यत्र न दुःखमाध्यात्मिकादि। न सुखं वैषयिकम् । न ग्राह्यं घटपटादि न ग्राहकमहमिदं गृह्णामीति प्राकृतं सविकल्पाहङ्काररूपत्वमविद्यात्मकत्वादहङ्कारस्य । न त्वनेनाधिष्ठातृरूपस्य ग्राहकस्याभाव उक्तः ।[2] उपेयत्वात्तस्य ।[3] उक्तं च तत्त्वगर्भे —

परमार्थेन न ग्राह्यं ग्राहकं वा न किञ्चन ।
यस्मादृते तत् स्वाभासमस्वाभासमिवेक्ष्यते ।। इति ।

एवं तर्हि तत् पाषाणप्रख्यं[4] मूढत्वमेव शून्यं वा । अत्रोच्यते—**न चास्ति** मूढभावोऽपीति । कुतश्चिद्रूपत्वात् । उक्तं च मुनिना—

यथा शीतोष्णयोर्मध्ये [5]काले नोष्णो न शीतलः ।
एवं हि[6] सुखदुःखाभ्यां हीनमस्ति पदं विभोः ।।

स्तुतौ च—

समुदेति यथा[7] भावान् विना[8] भानुर्नभस्तले ।
वेद्यं विनैव भगवान्[9] भवार्केण[10] स्वतोदयः[11] ।।

तथा—

यथोद्धृतविशेषस्य सामान्यस्य निजा स्थितिः ।
पृथङ् न शक्या[12] निर्देष्टुं न च तत्रास्ति तावता ।।
यथोद्धृता कुण्डलादेः केन कस्य निजा स्थितिः[13] ।
पृथङ् न शक्या निर्देष्टुं न च तत्रास्ति तावता[14] ।।
एवं नित्या निजा शुद्धा सुखदुःखाविशेषिता ।
[15]स्वसंवेदनसंवेद्या तव संविन्मयी स्थितिः ।।

नागार्जुनेनाऽप्युक्तम् —

सर्वालम्बनधर्मैश्च सर्वतत्त्वैरशेषतः ।
सर्वक्लेशाशयैः शून्यं न शून्यं परमार्थतः ।। इति ।

---

१. S'1 ०त्वास्या० २. S'1 omits daṇḍa ३. S'1 omits daṇḍa ४. D1 ०प्रस्थं ५. D1 कालो ६. D1 omits हि ७. S1 यदा ८. P, S'1 भावविना ९. P S'1 D2 भगवन् १०. P, S'1, S'2, D1, D2 भवान् केन emended to भवार्केण This emendation is supported by the MSs of the Saṃvitprakāśa ११. S'1, S'2, D2 ह्यतो D1 हृतो १२. S'2, D1, शक्त्या १३. S'1 स्वसंस्थितिः १४. This verse is added in MSs S'1 and D1 १५. D1 सु० ।

आलोकमालायां च—

विरुद्धत्वात्तमोवृत्तेर्नावकाशं ददाति या।
साऽवस्था काऽप्यविज्ञेया मादृशां[1] शून्यतोच्यते ॥
न पुनर्लोकरूढ्यैव नास्तिक्यार्थानुपातिनी।

इति ॥ ५ ॥

अत्रास्याऽमूढत्वाऽस्तित्वयोः सन्दानितकेनोपपत्तिमाह[2]—

**यतः करणवर्गोऽयं विमूढोऽमूढवत् स्वयम्।**
**सहान्तरेण चक्रेण प्रवृत्तिस्थितिसंहृतीः ॥ ६ ॥**

**[3]लभते तत् प्रयत्नेन परीक्ष्यं तत्त्वमादरात्।**
**यतः स्वतन्त्रता तस्य सर्वत्रेयमकृत्रिमा ॥ ७ ॥**

यतो यस्मात् स्पन्दतत्त्वादयं [4]बाह्यः करणवर्गो बुद्धिकर्मेन्द्रियाख्योऽन्तः-करणचक्रेण सह विशेषेण [5]मूढचेतनोऽ[6]विचेतनवत् स्वयं प्रवृत्तिस्थितिसंहृतीर्लभते।

एषोपपत्तिहेतुस्तु दृष्टान्तो भ्रामको मणिः।
यथा वाताग्निसंपर्कादयःपिण्डोऽग्निवद्भवेत् ॥
दाहपाकप्रकाशादौ शक्तस्तद्वदयं गणः। इति।

एवं योऽन्येषां चैतन्यापादने समर्थः स कथं निःस्वभावः। उक्तं षाड्गुण्य-विवेके—

स्वदेहसाक्षिकं चैतत् सर्वस्य ज्ञानचेष्टितम्।
ज्ञानानधिष्ठितः कायो लुठत्येव यतोऽधृतः[7] ॥
अत एव जडानामप्यधिष्ठातृकृता धृतिः।
गम्यते गगने ग्रावा न[8] [9]वार्येताऽन्यथा कथम् ॥ इति।

[10]तस्मात्तत् तत्त्वं प्रयत्नेनादरात्परीक्ष्यम्। प्रयत्न उद्योगरूप उत्साहः। आदरः श्रद्धा। अत्र च परीक्षणमुद्योगबलानुप्रवेशेन स्वीकरणम्। उक्तं चेह—

अतः सततमुद्युक्त[11] इत्यादि।

---

१. P, D2, माद्दशा २. S'1, D2 omit this line ३. D1 लभेते ४. S'1 बाह्यान्तष्करणवर्गो ५. S'2, D1 मूढो ६. D1 ०पि ७. D1 यतो ध्र्तः S'1 धृतेयतः ८. D1, S'1 omit न ९. D1 धार्यंते नान्यथा १०. D1 तस्मान्न ११. D1 ०युक्त।

सिद्धोक्तं च—

अदृश्यं नेत्रवद् ब्रह्म द्रष्टृत्वं चास्ति[1] नेत्रवत् ।
स्वात्मन्येवोपलम्भोऽस्य दर्शनं घटवन्न तु ॥ इति ।

यतो यस्मात्तस्येयमकृत्रिमा निजैव स्वतन्त्रता सर्वत्र । तेनैतदुक्तम्—यथास्य करणादिषु चैतन्यापादने स्वातन्त्र्यं तथा परपुरादिष्वपि सम्भाव्यतेऽभ्यासात् ॥ ७ ॥

तदिच्छयास्तु सामर्थ्यं करणानां स्वतन्त्रता ।
सर्वत्रोक्ताऽस्य या सा तु [2]भुक्तियुक्तिरतस्त्वियम् ॥

**नहीच्छानोदनस्यायं प्रेरकत्वेन वर्तते ।**
**अपि त्वात्मबलस्पर्शात् पुरुषस्तत्समो भवेत् ॥ ८ ॥**

अयं पुरुषो जीवात्मा [3]नेच्छानोदनस्य नेच्छाप्रेषणस्य करणचक्रचोदकस्यैव केवलं प्रेरकभावेन वर्तते । हिशब्द एवशब्दार्थेऽत्र[4] केवलशब्दार्थे वा । अपित्विति निपातः प्रतिषेधनिवृत्तौ स्वरूपद्योतकः । आत्मनो बलमात्मबलं निरावरणचिद्रूपं ज्ञत्वकर्तृत्वलक्षणम् । तत्स्पर्शात्तदवष्टम्भात् तत्समो भवेत् । सर्वज्ञः सर्वकर्ता[5] स्यादित्यर्थः ॥ ८ ॥

अनेन [6]सर्वस्वातन्त्र्यमुक्तमस्य च तद्भवेत् ।
अभिमानात्मकक्षोभक्षयेन त्वन्यदाह[7] च ॥—

**निजाशुद्ध्यासमर्थस्य कर्तव्येष्वभिलाषिणः ।**
**यदा क्षोभः प्रलीयेत तदा स्यात्परमं पदम् ॥ ९ ॥**

निजा सहजा[8]नादिर्याऽशुद्धिरविद्याऽविवेकमूला भोगाभिलाषमलरूपतयाऽसमर्थस्य सङ्कुचितशक्तेः[9] । अत एव च[10] कर्तव्येषु कार्येष्वभिलाषिणः साभिलाषस्य सतो न कार्यमिच्छतोऽपि भवति । तथा च श्रीसात्वता—

[11]अज्ञानव्यापकत्वं च सुखदुःखादिवेदनम् ।
सर्वज्ञस्यात्मतत्त्वस्य कर्मचक्रावलम्बनात् ॥

---

१. S'1 चास्य २. मक्ति emended to मुक्ति ३. S'1 नात्मने० ४. P omits ०त्र ५. D1 सकर्ता ६. P, S'1, D2 सर्वं ७. P, D2 त्वन्यमाह ८. P, D2 add daṇḍa ९. S'1 D1 omit daṇḍa १०. D1 omits च ११. P, S'1, D1, D2 अज्ञता व्यापकत्वं । This emendation agrees with the text of the ptd. edn. of the Sātvatāsaṃhitā.

[1]गीतास्वेषा प्रकृत्याख्याशुद्धिः[2] प्राक्कर्मवासना ।
मायाऽविद्या भ्रमो मोहोऽज्ञानं मलमिति क्वचित् ॥

गीतं च—

प्रकृतिं पुरुषं चैव विद्धयनादी उभावपि ।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान् ॥ इति ।

अनादित्वे समानेऽस्या [3]विशेषोऽयं विचारतः ।

लयो यन्मायारूपत्वात् । [4]तदुक्तं संवित्प्रकाशे[5]—

मायात्वमेतदेवास्या [6]यन्नाशस्तत्त्वदर्शनात्[7] ।
नहि विज्ञातरज्ज्वात्मा सर्पादीन्मन्यते पुनः ॥ इति ।

अन्यत्र च—

त्वत्तो द्वितीयमिह वस्तु यदस्ति किञ्चित्तद्विचारपदवीमवतारितं चेत् ।
गन्धर्वपत्तनमिवोपलयं प्रयाति त्वं शिष्यसे ध्रुवमतस्तव शेषसंज्ञा ॥इति।

विद्याधिपतेश्च—

भक्षणप्रकृतिना समाधिना युक्तितो विषयधाम्नि भक्षिते[8] ।
सर्वभक्षपदवीमुपेयुषः शिष्यते परमभक्षितो भवान् ॥

सा चेन्द्रजालिनो मायेवाऽस्थिता बाधकात्मनि[9] ।
[10]यथाऽग्नेर्धूमबिम्ब[11]मलवद्दर्पणस्य वा ॥

बुद्बुदाः[12] सलिलस्येव तच्छान्तौ निर्विकारिता[13] ।

यदा तु[14] क्षोभो विकारोऽशुद्धिजनितो देहाहम्प्रत्ययरूपो[15] विवेकेनात्मबलस्पर्शात् प्रलीयते प्रलयं याति तदा स्यात् परमं पदं स्वस्वरूपे स्थितिर्भवेदित्यर्थः । उक्तं [16]षड्धातुसमीक्षायाम्—

कर्माणि मोहमूलानि संसृतेः कारणं यतः ।
तत्क्षयात् कर्मनिर्मुक्तः स्वस्थः शान्ततमस्ततः ॥

---

१. P, S'1 गतीस्वेषा २. प्रकृत्याख्या शुद्धिः emended to प्रकृत्याख्याशुद्धिः ३. S'2 ०स्याविशेषो० ४. D1, S'2 ०रूपत्वादुक्तं ५. D1, D'2 ०प्रकाशके ६. P ०मेतदेव स्यान्नाश० D2 ०मेतदेवास्यान्नाश० ७. P, D2 ०प्रदर्शनात् ८. D2 भक्षते ९. S'2 बाधिकं १०. P, D2, S'1 ०ग्नि० ११. P, S'1, D2 ०लेखेव S'2 ०लेखे० S'2 omits ०मल० १२. D1 ०बुधाः १३. D1, S'2 निर्विकारिता १४. D1, omits तु १५. S'1, S'2 ०प्रत्ययविकल्परूपो १६. D1 adds च ।

नारदसंग्रहेऽपि—

यथा सुभर्जितं बीजं नेह भूयः प्ररोहति ।
विकल्पक्षीणचित्तस्य तथा भूयो न[1] संसृतिः ॥

स च क्षोभक्षयः शनैः शनैरभ्यासाद्भवेत् । उक्तं ह्यात्मसंबोधे—

यथाग्निपोत्र[2] ज्वलनोद्धृतं सच्छैत्यं प्रयायाच्छनकैर्न सद्यः ।
अज्ञानपङ्केऽपि तथा निरस्ते कालेन कैवल्यमुपैति देही ॥

षाड्गुण्यविवेकेऽप्यात्म[3]परमात्मनोरेतावान् भेदोऽभिहितः—

अविद्याकृतसङ्कोच[4]गृहीताहंयुतास्य या ।
तया भिन्नोऽप्यभिन्नोऽयं[5] तत्त्वतः स्वप्नभीतवत् ॥

अभीत एव यः स्वप्ने बिभ्यदभ्येति सम्भ्रमम् ।
तस्य [6]स्वप्नादभिन्नस्य को भेदः पारमार्थिकः ॥

तथा हि[7] मिथ्यैव भयं ममेति यदि बुद्ध्यते ।
स्वप्नतत्त्वं परामृश्य भीतिभिन्नैर्न[8] बाध्यते ॥

एवं त्वन्मय एवाऽहमिति भावनया त्वयि ।
प्रलीनाऽहङ्कृतिग्रन्थिः पश्यत्येव त्वदात्मताम् ॥ इति ।

संवित्प्रकाशे च—

कर्मेदं त्वत्कृतमपि त्वन्मयं येन[10] माधव ।
विहीनाऽहङ्कृतिस्ततस्त्वमेव परिशिष्यसे ॥

एतावतैव भेदोऽस्य यदहम्मानिताऽऽत्मनि ।
सा चेद्विलीना त्वद्भक्त्या नष्टो भेदः[11] स्थितैकता ॥

॥ ९ ॥

स्वरूपस्थस्य गुणानाह—

**तदाऽस्याऽकृत्रिमो धर्मो ज्ञत्वकर्तृत्वलक्षणः ।**
**यतस्तदीप्सितं सर्वं जानाति च करोति च ॥ १० ॥**

तदा तस्मिन् प्रलीनक्षोभात्मके कालेऽस्यात्मनः स्वरूपस्थत्वादकृत्रिमः

---

१. D2 omits न २. P, D2 स्वात्म॰ ३. D1 ॰पात्रं ४. S'1 omits ॰ात्मपरम॰ ५. D1 ॰सङ्कोचे ६. P ॰पि भिन्नोऽयं ७. D1 मुप्नाद॰ ८. S'1 omits हि ९. D1, S'2 ॰मित्रै॰ S'1 ॰मित्तै॰ १०. D1 ॰मयमेव ११. D1 मोहः ।

सहजो धर्मः स्वभावो भवतीति वाक्यशेषः। किंभूतः जानातीति ज्ञः। तस्य भावो ज्ञत्वम्। करोतीति कर्ता। कर्तुर्भावः कर्तृत्वम्। आभ्यां यो लक्ष्यते, एते वा [1]लक्षणरूपं चिह्नं यस्य धर्मस्य[2] स ज्ञत्वकर्तृत्वलक्षणः। यतो यस्माद्धर्माद्धेतोर्वा यज्ज्ञातुमीप्सितमभिमतं [3]तज्जानाति यत् [4]कर्तुमिष्टं तत् करोति स्वात्मनो वा परस्य वा। पञ्चरात्रे चैष एव धर्मो विवेकजज्ञानशब्देनोक्तः—

तस्य च प्रादुर्भवतः किं पूर्वरूपं यत् सर्वज्ञो भवति सर्वदर्शी सर्वेश्वरः सर्वशक्तिरिति।

स चास्य करणैर्विनाऽपि स्यात्। तत्रैवोक्तं हि—तद्यथा अग्निर्नाम कस्मिंश्चिद्दह्ये नान्यत्किञ्चिदुपादत्ते तेन धक्ष्यामीति स्वयमेव दहति। एवमयमात्माऽनुपादाय ज्ञाताऽनुपादायकारी[5] स्वात्मनैव सर्वकरः।

कुतो[6] बोधरूपत्वात्। षाड्गुण्यविवेके उक्तम्—

नहि बोधो विचित्रार्थनिर्माणेऽन्यमपेक्षते।
सङ्कल्पादेव यो रूपसहस्राणि सृजत्यजः॥

ये त्वस्य ज्ञत्वकर्तृत्वादीन्यन्यतो वदन्ति तेषामनीशतैव स्यात्। उक्तं ह्यागमरहस्ये—

येऽपीश्वरं व्यपदिशन्ति निमित्तहेतुं [7]तैरर्पितस्तिल [8]जलाञ्जलिरीशितायै।
[9]अन्याङ्गनोपगमनेन वशीकृतस्य कामीश्वरस्थितिममी बत सङ्गिरन्ते॥इति॥

तस्माद्युक्तमुक्तम्॥ १०॥

[10]अस्याऽकृत्रिमधर्मस्य स्थैर्यायोपाय उच्यते—

**तमधिष्ठातृभावेन स्वभावमवलोकयन्।**
**स्मयमान इवास्ते यस्तस्येयं कुसृतिः कुतः॥ ११॥**

तं शुद्धमात्मस्वभावमधिष्ठातृभावेन चिद्रूपतया सर्वव्यापकत्वेनावलोकयन् पश्यन् प्रतिजानन् स्मयमान इव विस्मयाविष्ट इव विकसन्निवास्ते[11] यस्तिष्ठति[12]

---

१. P लक्षणं रूपं D2, S'1 लक्षणं रूपं २. D1 omits धर्मस्य ३. P तज्जानाय D2 तज्जानाय ४. S'2 omits, passage from कर्तुम् up to कुतः बोधरूपत्वात् ५. D1 omits ज्ञाताऽनुपादाय० ६. S'1 omits कुतो ७ P, D2 ०पितः स्थल० ८. D1 ०रीशतायै ९. P, D2, S'1, S'2 अन्याङ्गन० our reading agrees with quotes of this verse in Sv. T. VI p. 4 and T. R. p. 104–5. १०. Passage from ०कृत्रिम० to उक्तं च missing in S'2 ११. P ०न्निव १२. P, D1, D2 adds daṇḍa.

तस्याविद्याविलयादियं कुतः कुसृतिः कुत्सितसंसरणं न कुतश्चिद् भवतीति वाक्यशेषः । उक्तं च शिवसूत्रेषु—

विस्मयो योगभूमिका ।

अस्य चैतदवलोकनं [1]यद् द्रष्टृरूपतयाऽनुभवनम् । उक्तं [2]ह्रीष्टोपदेशे—

यदिदं दृश्यते दृष्टया गृहं पुत्राऽत्र सन्त्यज ।
येन पश्यसि[3] तं पश्य यं दृष्ट्वा पश्यसेऽखिलम् ॥

कर्त्रा चोक्तम्—

यो जगु पश्चि एपु किनु वीक्षोमाइत्थ करो ।
विषयालविलुद्दि एसे पत्तापत्त रावीक्षो अपलइयद अस्त्युबुद्दि ॥

तथाऽस्यान्यतः कुतः साभिलाषतया विकल्पशिल्पादिकुमार्गानुसरणमपि त्वेवं सदैव स्वस्वरूपे[4] स्थितिर्भवेत् । तत्स्थत्वाच्चेश्वरवत् सत्यसङ्कल्पः स्यादित्यतोऽस्मिन्नेवासति[5] । यतोऽभ्यास विना ज्ञातमपि स्वीकर्तुं न शक्यते । तदन्तरेण च कुतः सिद्धिः ? । उक्तं [6]मुनिना—

यदि वाचनिकाज्ज्ञानान्मुक्तिः स्याद्भावनां विना ।
शारीरमानसैर्दुःखैर्मुच्येरन् सर्वजन्तवः ॥

तथा च[7] युक्तौ –

रसायनं विनास्वादात् सूचितं [8]ह्यप्यसिद्धिदम् । इति ।

अन्यच्चोक्तम्—

आगोपबालवनितं भगवंस्त्वमित्थं ज्ञातोऽप्युपायविरहान्न तु मोक्षदोऽसि ।
नान्तः [9]स्थितं भवति धेनुषु [10]तृड्विहर्तृ क्षीरं तदेव पुनरभ्यवहारतः स्यात् ॥

॥ ११ ॥

तान् ध्वंसयितुमाहेदं ये त्वाहुः शून्यवादिनः ।
अभावं भावयेत्तावद्यावत्तन्मयतां व्रजेत् ॥ इति ।

**नाऽभावो भाव्यतामेति न च तत्रास्त्यमूढता ।**
**यतोऽभियोगसंस्पर्शात् तदासीदिति निश्चयः ॥ १२ ॥**

---

१. S'2 adds daṇḍa २. S'1 ह्रीष्टोदेशे ३. P पश्यति ४. S'1 S'2 ०रूपत्वे ५. D1, D2 ०ासीत ६. D1 adds च ७. D1, D2 तु ८. P, D2 ० तं ह्यपि D1 ०तमपि ९. D1 स्थितो १०. D1 पितहन्तृ D2 पितृहर्तृ S'1 पिण्डहर्तृ S'2 पितृहन्तृ ।

**अतस्तत्कृत्रिमं ज्ञेयं सौषुप्तपदवत् सदा ।**
**न त्वेवं स्मर्यमाणत्वं तत्तत्त्वं प्रतिपद्यते ॥ १३ ॥**

नाऽभावः शशविषाणसदृशो भाव्यतामनुभवविषयतामेति[१] प्राप्नोत्यवस्तुत्वात् । न च तत्राऽ[२]भावेऽमूढतास्त्यपि तु मूढावस्थैव सा । यतोऽभियोगसंस्पर्शादभिलाषसंयोगात्तदभावभावनमासीदभूद्[३]तीतमिति निश्चयः । यस्मात् स मम शून्यावस्थातीतेति स्मर्यते । तदुक्तम्—

अभावो येन भावेन बोध्यतेऽस्ति[४] न नास्ति [५]सः ।
तस्य भावस्य सद्भावो वद केन निवार्यते ॥
सोऽस्त्यतश्चिन्मयो भावो येन सर्वं विभाव्यते । इति ।

अतो हेतोस्तदभावभावनं कृत्रिममनित्यं सदा ज्ञेयम् । किमिव सौषुप्तपदवत् सुषुप्तावस्थेव । न त्वेवं[६] मूढावस्थावत् तदात्मतत्त्वं स्मर्यमाणत्वं स्मर्तव्यतां प्रतिपद्यते गच्छति, स्मर्तृत्वाच्चिद्रूपस्य, नित्योदितत्वाच्च । तस्मात्तत्त्वं गुरूपदेशेनादरात् परीक्ष्यमिति ॥ १२-१३ ॥

एवम्—

अवस्थाद्वयमत्राऽस्ति[७] स्मर्तृस्मर्तव्यभेदतः ।
यत्तस्य [८]नित्यानित्यत्वविचारायेदमुच्यते ॥—

**अवस्थायुगलं चाऽत्र कार्यकर्तृत्वशब्दितम् ।**
**कार्यता क्षयिणी तत्र[९] कर्तृत्वं पुनरक्षयम् ॥ १४ ॥**

अत्रास्मिन् पूर्वोक्ते स्पन्दतत्त्वेऽवस्थायुगलं दशाद्वयं यदस्ति कार्यकर्तृत्वशब्दितं कार्यकारणसंज्ञितं [१०]भोग्यभोक्तृभेदभिन्नदृश्यद्रष्टृभिदा वेद्यवेदकरूपम् । तत्र तयोर्मध्याद्या[११] कार्यता सा क्षयिणी उत्पत्तिविनाशयुक्ता । यत्पुनः कर्तृत्वं तदक्षयिनिर्बाधं[१२] चित्स्वरूपत्वात् ॥ १४ ॥

अत एव—[१३]

**कार्योन्मुखः प्रयत्नो यः केवलं सोऽत्र लुप्यते ।**
**तस्मिँल्लुप्ते विलुप्तोऽस्मीत्यबुधः प्रतिपद्यते ॥ १५ ॥**

---

१. P, D2 विषयत्वमेति २. P •भावे अमूढता S'1 भावेषु ३. P adds daṇḍa ४. P, S'2, D2 बाध्यते D1 भाव्यते 5. D1 सा ६. D1 त्वे ७. P, S'1 •मात्राऽस्ति ८. P, S'1, D1 नित्यनित्य० ९. D1 चात्र १०. D1 भोग्ये ११. P तयोरध्यासाद्या १२. P तदक्षयम् निरवधि १३. D1 adds आदरात्तारतम्याद्विनादरं प्रेक्षणेन कार्यता क्षयिणी च चेत् न चेयमिति संप्रेक्ष्य नाहमित्यर्थमाह च ।

अत्रास्मिन् कार्ये[१] बाह्येऽर्थे क्षयिणि सति कार्योन्मुखः कार्यसम्पादनाभिमुखो यः प्रयत्नो बाह्यकरणव्यापाररूपः स केवलं लुप्यते न लक्ष्यते न्यग्भूयैव स्वात्मन्यास्ते, स्थगितेन्द्रियस्य वा [२]व्यापारासामर्थ्यात्। तस्मिन् प्रयत्ने लुप्ते सति अस्मि अहं विलुप्तो नष्ट इत्यबुधोऽज्ञः प्रतिपद्यते जानाति। न तु चिद्रूपस्य विनाशोऽस्ति। उक्तं च—

विज्ञप्तेर्न विनाशोऽस्ति विनष्टेऽपि शरीरके।
अभावे सूर्यकान्तस्य नैवास्ति सवितुः क्षतिः॥

इति॥ १५॥

कस्माच्चेत्याह—

**न तु योऽन्तर्मुखो भावः [३]सर्वज्ञत्वगुणास्पदम्।**
**तस्य लोपः कदाचित् स्यादन्यस्यानुपलम्भनात्॥ १६॥**

देशकालादिविच्छिन्नस्य कार्यस्यैव लोपो निवृत्तिर्न तु योऽन्तर्मुखो[४] भावो बहिरप्रसूतेः[५] स्वस्वरूपस्थः स्वस्वभावः सर्वज्ञतादीनां गुणानामास्पदमाश्रयस्तस्य भावस्य लोपः कदाचित्स्याद्भवेद् उपपद्यते। कुतो न स्यात्। चिद्रूपं मुक्त्वाऽन्यस्य द्वितीयस्यानुपलम्भनादनुपलब्धेः। तस्यैव[६] हि सर्वत्र [७]सर्वदोपलब्धिः। एतदुक्तम्—

देशकालक्रियाकारैरवच्छिन्नेषु वस्तुषु।
अनवच्छिन्नरूपस्त्वं भासि तस्य बहिः स्थितेः॥ इति।

अत्र च—

भेदः सर्वज्ञतादीनां ज्ञानादीनां च नास्त्यमी।
ज्ञानस्यैव धर्मतया चिद्रूपस्य [८]स्थितिर्यतः॥ इति।

उक्तं च षाड्गुण्यविवेके—

गुणेषु ज्ञानमाद्यन्ते तेन तत्त्वेऽवधारिते।
धर्मत्वेनेशिताशक्तिबलवीर्यौजसां स्थितेः॥ इति।

कक्ष्यास्तोत्रे च—

ज्ञानं प्रशान्तं तव बोधवृत्तिरैश्वर्यमुद्यत्प्रसरा परेषाम्।
प्रकाशनं प्रत्यपि योग्यरूपा शक्तिर्बहिःस्थैर्यवती बलं सा॥

---

१. S'1 omits कार्ये २. D1 व्यापारसामर्थ्यात् ३. D1 सर्वज्ञत्वं॰ D2 सार्वज्ञ्य॰ ४. D2 ॰न्तर्मावो ५. D1 ॰प्रसृतेः ६. D2 सएव ७. D1 सर्वदोपलब्धाः ८. D1 स्थितार ९. P, S'2, D2 ॰नेषिता।

उत्पन्नबाह्यप्रसरा[१] तु वीर्यं तेजश्च बाह्यानवभासयन्ती[२] ।
षोढेत्थमेकैव तव स्वशक्तिर्बाह्यावमर्शात्तु भवेदविद्या ॥

तत्र सर्वज्ञता ज्ञानं सर्वं हि जायते ततः[३] ।
बलस्य तृप्तिमूलत्वात् क्षम्यस्य[४] तदभावतः ।
अनादिबोधस्तेजोऽत्र बोधमूलं हि तत्सदा ॥

तदुक्तम्—

प्रभावलक्षणं यच्च तेजः प्रह्वयते परान् ।
बोधत्वादेव तद्वेद्यं[५] बोधः प्रह्वयते जगत् ॥
स्वतन्त्रताऽत्र[६] चै.वर्यं स्वातन्त्र्यादीश्वरस्य तु । इति ।

तदुक्तम्—

स्वतन्त्रः सर्वकृत्येषु न नियोज्यो न विघ्नवान् ।
प्रवृत्तोऽप्यप्रवृत्तो[७] वा यतस्तेन त्वमीश्वरः ॥
वीर्यं सदाऽलुप्तशक्तिर्नाशाभावश्च तद्वतः ।

तदुक्तम्—

आत्मसत्त्वापरिभ्रंशलक्षणाद्वीर्यमासते[८] ।
वीर्यादितच्च ते कार्येऽप्यन्वयः[९] स्वर्णवच्च यः ।
अनन्तशक्तिः शक्तिः सा सामर्थ्यात् सर्वतः सदा ॥

॥ १६ ॥

तस्य तु [१०]क्व कस्योपलब्धिरित्याह—

**तस्योपलब्धिः सततं त्रिपदाव्यभिचारिणी ।**
**नित्यं स्यात् सुप्रबुद्धस्य तदाद्यन्तेऽपरस्य तु ॥ १७ ॥**

तस्य चिद्रूपस्यात्मनो योगिनः सततमुपलब्धिरनुभवो भवेत् । कीदृशस्य[११] योगिनः नित्यं सदैव सुप्रबुद्धस्य । कीदृश्युपलब्धिः । त्रिपदाव्यभिचारिणी त्रिष्वपि

---

१. P, S'1 D2 ०प्रसरां २. P, D1, D2 ०वमासयन्ति ३. P, ततः । इति । तृप्तिबलम् तथाहि ४. P, S'1 S'2, D1, D2 क्षमस्य emended to क्षम्यस्य ५. D1 तद्बोध्यं ६. S'1 omits ०त्र ७. P, D2 ०स्य० S'1 ०यास्य ८. P, S'2, D2 ०व्यैयंमासत S'1, ९. P ०नन्वयः १०. P क्वो० ११. S'1, D1, D2 कीदृशो ।

जाग्रदादिषु पदेष्ववस्थासु या[1] न व्यभिचरति न निवर्तते सा तथोक्ता। [2]तुर्ये तु निर्भ्रान्तैव। उक्तं च—

काप्यवस्था न ते साऽस्ति यस्यां संविन्न वर्तते।
तेन चिद्घनमेव त्वां योगिनः पर्युपासते॥

अपरस्य पुनरीषत्प्रबुद्धस्य प्रबुद्धस्य च। तदाद्यन्ते तदिति पदत्रयस्य परामर्शः। एतदुक्तम्—

तदादौ प्रागवस्थायां (तदन्तेऽपि) च तन्मयम्[3]।
पदं [4]प्रत्ययस्याद्यन्ते जाग्रत्तुर्याव वागमात्[5]॥ इति।

अथवा तदादौ तदन्ते च तन्मध्ये जाग्रत्स्वप्नयोरित्यर्थः। यतः प्रबुद्धस्यैतयोरेव स्फुटोपलब्धिः संवेदनम्॥ १७॥

स च तस्य क्व कथमिति स्फुटीकर्तुमाह—

**ज्ञानज्ञेयस्वरूपिण्या शक्त्या परमया युतः।**
**पदद्वये विभुर्भाति तदन्यत्र तु चिन्मयः॥ १८॥**

विभुर्व्यापकः चिन्मयश्चिद्रूपः परमात्मा परमया शक्त्याऽत्युत्कृष्टेन सामर्थ्येन युक्तः। पदद्वये जाग्रत्स्वप्नात्मके ाति दीप्यते प्रकाशते। कीदृश्या शक्त्या? ज्ञानज्ञेयभेदेन द्विरूपया। द्वैरूप्यात्त्वस्याः पारम्यम्। अत एवास्मिन्नवस्थाद्वये द्विविधोपलब्धिः। तदन्यत्र पुनस्तस्मात्पदद्वयादन्यस्मिन् पदद्वये सुषुप्ततुर्याख्ये चिन्मयश्चिन्मात्र एव। ज्ञेयाभावाज्ज्ञानस्वरूप एवेत्यर्थः॥ १८॥

तस्योपलब्धिर्योक्ता सा गुणस्पन्दादिभिः स्थितैः।
कुतस्त्या चेति सा शङ्का ये तान् प्रत्युच्यते त्विदम्॥—

**गुणादिस्पन्दनिष्यन्दाः सामान्यस्पन्दसंश्रयात्।**
**लब्धात्मलाभाः सततं स्युर्ज्ञस्यापरिपन्थिनः॥ १९॥**

गुणाः सत्त्वरजस्तमांसि। आदिग्रहणान्महदहङ्कारतन्मात्रेन्द्रियभूतानि च। गुणादिश्चासौ स्पन्दः गुणादिस्पन्दः।[6] तस्य ये[7] निष्यन्दाः प्रवाहाः सुखदुःखमोहोर्मिज्ञानविशेषा[8]स्ते[9] प्रागुक्तलक्षणस्य सामान्यस्पन्दस्यान्तर्लीनाऽनन्तविशेषस्य संश्रयादालम्बनाद्धेतोर्लब्धात्मलाभाः प्राप्तसत्ताकाः।[10] अत एव ज्ञस्य विदितवेद्यस्य

१. P न या २. P कार्ये ३. तन्मयै emended to तन्मयम् ४. प्रत्ययव- emended to प्रत्ययस्य ५. तुर्यप्व emended to तुर्याव ६. D1 omits daṇḍa ७. P ते ८. P, D2 add daṇḍa ९. P, D2 तस्य १०. S'1 omits daṇḍa।

योगिनः स्वरूपाव्यवधानादसम्पर्कात् सततं नित्यमपरिपन्थिनः स्युः। स्वभावाच्छादका न भवन्तीत्यर्थः। सिद्धोक्तं च—

यद्वत्प्रकाशकस्य[१] प्रकाश्यविषये[२] न दृश्यते मानः[३]।
सम्पर्कात्तिव तद्वत् संविद्वेद्ये न भाव्यते जातु॥

ते चास्यैव स्पन्द[४] इति प्रागेवोक्तम्। मतङ्गपारमेश्वरेऽपि—

शिवाद्यवनिपर्यन्तो योऽयमध्वाऽतिविस्तरः।
स समस्तश्चितौ ज्ञेयस्तया संवेद्यते यतः॥

गीतासु च—

दैवी ह्येषा गुणमयी मम माया दुरत्यया।
मामेव ये प्रपद्यन्ते मायामतितरन्ति[५] ते॥
॥ १९ ॥

अज्ञस्य तु—

**अप्रबुद्धधियस्त्वेते स्वस्थितिस्थगनोद्यताः।**
**पातयन्ति दुरुत्तारे घोरे संसारवर्त्मनि॥ २०॥**

अप्रबुद्धा सम्मूढा[६] धीर्बुद्धिर्यस्य पुंसस्तस्य पुनरेते गुणादिस्पन्दनिष्यन्दाः स्वस्थितेश्चिद्रूपाया अवस्थायाः स्थगनेऽवच्छादने प्रोद्यताः। यतोऽसौ तदात्मकमेव नित्यमात्मानं पश्यति, न शुद्धबुद्धरूपतया। उक्तं च—

यथादर्शं शिशुः स्वच्छं निःश्वासैः स्वैर्मलीमसम्।
करोति तद्वद्विज्ञानं स्वविकल्पैर्जडाशयः॥ इति।

अत एव संसारवर्त्मनि पातयन्ति जननमरणप्रवाह[७]मार्गे प्रेरयन्ति। कीदृशे[८]? दुरुत्तारे दुःखेनोत्तरणं निस्तारो[९]यत्रात एव घोरे क्लेशप्रदे। तदुक्तं ज्ञानसम्बोधे—

यद्यपि स्वात्मशक्त्यैव गतिः [१०]साक्षान्धयोर्द्वयोः।
तथाप्येकः स्वयं याति द्वितीयोऽन्येन नीयते॥

साक्षवत्[११] स्फीतबोधानां स्वातन्त्र्य विषमेष्वपि।
अन्धवन्मन्दबुद्धीनां पारतन्त्र्यं समेष्वपि॥

इति॥ २०॥

---

१. P ०प्रकाशभवने २. P, S'1 ०विषयो ३. P, S'1 S'2 D2 D1, मातः ४. S'1 स्पन्दनेति ५. S'1 मायान्तं तरन्ति S'2 D मायामेतां ६. D1 मूढा ७. D1 ०प्रवाहे ८. D1, S'2 कीदृक्षे ९. P adds daṇḍa १०. P, D2 S'1 साक्ष्यन्ध० ११. P, D2' S'1, साक्षि०।

अथात्राऽज्ञस्याप्युत्तरणोपायमाह—

अत:[१] सततमुद्युक्त: स्पन्दतत्त्वविविक्तये ।
जाग्रदेव निजं [२]भावमचिरेणा[३]धिगच्छति ।। २१ ।।

यतस्ते पातनशीला: ।[३] [४]अतोऽस्मात् कारणाद्य: सततं सर्वकालमुद्युक्तो विकस्वरस्वभावतया कृतोद्योग: । किमर्थम् स्पन्दतत्त्वस्य विविक्तये विवेचनाय स्वरूपाभिव्यक्त्यर्थम् । यदुद्योक्तृरूपं तत् । उक्तञ्च[५] शिवसूत्रेषु—

उद्योग: शिव[६] इति ।

अत: [७]प्रजाग्रदेव जाग्रदवस्थायामेव व्युत्थानेऽपि निजमात्मीयं स्वभावमचिरेण शीघ्रमधिगच्छति प्राप्नोति। अस्य चैतद्विवेचनम्[८] । यदहं [९]शुद्धबोधैकरूपो जगच्चेदं मत्स्फार एव । उक्तं च—

सर्वो ममायं विभव इत्येवं परिजानत: ।
विश्वात्मनो विकल्पानां प्रसरेऽपि महेशता[१०] ।।

पञ्चरात्रेऽपि

यदात्मनि सर्वभूतानि पश्यत्यात्मानं च तेषु पृथक्च तेभ्यस्तदा मृत्योर्मुच्यते जन्मनश्च ।

अन्यत्र च—

निर्मला[११]नन्तबोधैकरूपस्त्वं भव्यबुद्धिभि: ।
वेद्याद्वा वेदकाद्वापि लभ्यसेऽवहितात्मभि: ।।

तत्त्वार्थचिन्तामणौ च—

इत्थं तत्तदनल्पमोहदलनप्राप्तस्वरूपोदयो
योगो नित्यमनात्मभावविरहात् स्वात्मस्थितो निर्वृत: ।
दृश्यद्रष्टृविवेकविद्भ[१२]वपदव्यापी विमुक्तामयो
व्युत्थानेऽपि समाधिभाग्भवति सन्मोक्षश्रिय: कारणम् ।।

इति ।। २१ ।।

---

१. D1 भावं २. S'2 न चिरेण ३. S'1 omits daṇḍa ४. S'2 अतस्मात् ५. D1 उक्तं ६. D1, S'1 उद्यमो भैरव ७. D1, S'1 सजाग्रदेव ८. S'1 ०द्विवेक एनम् ९. D1 शुद्धो १०. D1 महेशिता S'1 adds मुक्तता S'2 विमुक्तता ११. P, D2 ०ानन्त्य० १२. S'1 ०विभवपद० ।

जाग्रदेव स्वभावोक्तिर्योक्ता साऽज्ञैर्न लक्ष्यते ।
अतः स्पन्दोदयपदान्युच्यन्ते येषु[१] लक्ष्यते ॥

**अतिक्रुद्धः प्रहृष्टो वा किं करोमीति वा मृशन् ।**
**धावन्[२] वा यत्पदं गच्छेत् तत्र स्पन्दः प्रतिष्ठितः ॥ २२ ॥**

द्विषोद्दीपितामर्षोऽतिक्रुद्धः सन् प्राग् यत्पदं गच्छेत् यं[३] स्फारमालम्बते यामौन्मुख्यवृत्तिं स्पृशेत् । अथवा सुचिरागतप्रियदर्शनादिना प्रहृष्टः प्रहर्षितो यत्पदं गच्छेत् परानन्दरूपं गृह्णीयात् । तथा अनेककार्यकल्लोलाकुलतया किं करोमि ? इदं करोमि, अथवेदं करोमीति मृशन् परामृशंश्चिन्ताविष्टो यत्पदं गच्छेन्निश्चयकारिणीं दशामाश्रयेत्, तथा कान्ताहृतचित्ततया सम्भ्रमाद्वा धावन् धावमानो[४] यत्पदं गच्छेद्यामवस्थामारोहति,[५] तत्र तस्मिन् पदे[६] स्पन्दः[७] प्रागुक्त आत्मस्वभावः प्रतिष्ठितः स्फुटोपलभ्यतया स्थितः । एतदुक्तं भवति—

यत्र यत्र यदा येन सर्वशक्तिलयो भवेत् ।
स्फुटः स्यात् स्पन्दतत्त्वस्य तत्र तत्र तदोदयः[८] ॥ इति ।

यतः—

क्रोधाद् दुःखभुवः सर्वा हर्षात् सुखभुवः स्मृताः ।
किं करोमीति मोहात्तथा[९] [१०]धावन्तोन्द्रियवृत्तयः ॥ इति ।

उक्तं च विज्ञानभैरवे—

[११]क्रोधाद्यन्ते भये शोके गह्वरे वारणे रणे ।
कुतूहले क्षुधाद्यन्ते ब्रह्मसत्ता समीपगा ॥ इति ।

रहस्यस्तोत्रे च—

क्रोधहर्षविवशः परां दशामाश्रितोऽथ[१२] विमृशंश्च यः[१३] क्रियाम् ।
यत्स्पृशत्यनियतक्रियास्पदं[१४] स्पन्दमात्मबलदं वदन्ति ते ॥
एषोऽन्यत्र[१५] तुटेः[१६] पातः प्रोक्तः सर्वज्ञतादिभाक् ॥ इति ।

[१७]तुटिपाते सर्वज्ञत्वसर्वकर्तृत्वसर्वेशितादयः[१८] । एष च गुरूपदेशेनादरात् परीक्ष्यः ॥ २२ ॥

---

१. D1 येन २. D1 धावत्वा ३. P adds ह ४. P adds वा ५. D2 ०रोहति ६. D2 पदे ७. S'2 omits स्पन्दः ८. S'1 उदयोदयः ९. D2 मोहेत्था १०. D1 भावश्चे० D2 धावच्चे० S'1 धावश्च० S'2 धावंश्चे ११. S'2, D1, D2 क्षुत० १२. D2 ०श्रियोऽथ १३. D1 यत्क्रियाम् १४. S'1 ०पदं १५. S'1 ०न्य० १६. P, S'1, S'2 त्रुटेः १७. P, S'1, S'2 त्रुटि० १८. D1 S'2 सर्वेशत्वा० ।

अस्यैवोदयायोपायान्तरं विशेषकेणाह—

**यामवस्थां समालम्ब्य यदयं[१] मम वक्ष्यति ।**
**तदवश्यं करिष्येऽहमिति सङ्कल्प्य तिष्ठति ॥२३॥**
**तामाश्रित्योर्ध्वमार्गेण[२] सोमसूर्यावुभावपि ।**
**सौषुम्णेऽध्वन्यस्तमितो हित्वा ब्रह्माण्डगोचरम् ॥२४॥**
**तदा तस्मिन् महाव्योम्नि प्रलीनशशिभास्करे ।**
**सौषुप्तपदवन्मूढः प्रबुद्धः स्यादनावृतः ॥२५॥**

अयमेष देवदत्तो ज्ञाता अद्भुतसद्वस्त्वभिधाय्यनुल्लङ्घ्याज्ञो यत्किञ्चिन्मम वक्ष्यति वदिष्यति तदवश्यमहं करिष्येऽनुष्ठाष्यामि[३] करिष्यामीति **सङ्कल्प्य यामवस्थामौन्मुख्यरूपां** वृत्तिं **समालम्ब्य** गृहीत्वा यस्तिष्ठति तस्य पुंसस्ता**मवस्थामाश्रित्योर्ध्व**[४]**मार्गेण** विषुवत्प्रवाहेण **सोमसूर्यावुभावपि** द्वावप्यपानप्राणौ[५] मनःप्राणौ वा । **सौषुम्णेऽध्वनि** मध्यमनाड्यां परशक्तिमार्गे[६] स्वयमस्तमितो लयं गच्छतः । किमस्य हृद्गतं स्यादिति कुतूहलात् । किं कृत्वा भवतः ? **ब्रह्माण्डगोचरं हित्वा** शरीरविषयं[७] विहाय, देहाहंभावं त्यक्त्वेत्यर्थः । उक्तं च—

जाते देहप्रत्ययद्वीपभङ्गे प्राप्तैकत्वे[८] निर्मले बोधसिन्धौ ।
[९]अव्यावर्त्यैवेन्द्रियग्राममन्तर्विश्वात्मा त्वं[१०] नित्यमेकोऽवभासि ॥ इति ।

तदा तस्मिन् काले तस्मिन् महाव्योम्नि च परचिदाकाशे प्रत्यस्तमितशशिभास्करे प्रशान्तज्ञानक्रिये [११]मूढोऽनभिव्यक्तस्वस्वभावः[१२] [१३]स्वप्नादिना मुह्यमानो[१४]ऽप्रबुद्धो[१५] निरुद्धः स्यात् सौषुप्तपदवत् । यथा सुषुप्तपदे तथा प्रबुद्धस्त्वनावृत[१६] एव भवेत् । उक्तं च रहस्यस्तोत्रे—

स्वात्मनि स्तिमितसोमभास्करं व्योममार्गमतिवृत्य[१७] तस्थुषः ।
भावनाञ्जितदृशोऽपि खेचराः केचिदेव तव धामदर्शिनः ॥ इति ।

प्राणापानप्रशान्तिरेव चान्यत्र निरञ्जनतत्त्वोदये युक्तिः प्रोक्ता । मयाप्युक्तं भोगमोक्षप्रदीपिकायाम् —

---

१. D2 यदा २. D1 ०र्धं० ३. D1 ०नुष्ठास्यापि ४. D1 ०र्धं० ५. D1 omits द्वावप्य० adds अपान० ६. S'1 परामार्गे ७. S'1 ०विषये ८. D1 ०कध्यै D2 ०कप्ये S'1 ०कत्व S'2 ०काध्ये ९. P, D2 अध्या० १०. S'1 ०स्मकरत्वं ११. P, D1, D2 गूढो १२. P ०स्वभाव १३. P स्वप्नादिनाऽपुह्यमानः १४. P ०मानः १५. P ०द्धोऽनि० १६. S'1 omits ०स्त्व० १७. P ०तिवर्त्य ।

कामाख्ये विषतत्त्वे निरञ्जनाद्वै क्रमाच्च सिद्धिः स्यात् ।
सूर्ये सोमे[1] हृदयात्तयोः शमाच्चेति शास्त्रसर्वस्वम् ।। इति ।

एवं स्पन्दतत्त्वस्योदयः प्रोक्तः ।[2] तदाऽस्मादेव च सहजो मन्त्रोदयः । उक्तं च बौद्धायनसंहितायाम्[3]—

शान्ते चन्द्रे त्वमान्ताख्ये[4] यावन्नोच्चरते रविः ।
उदयः सर्वमन्त्राणां विलयश्च[5] दिवौकसाम् ।। इति ।

मालिनीविजयेऽपि —

यत्राधारविनिर्मुक्तो जीवो लयमवाप्स्यति ।
तत् स्थानं सर्वमन्त्राणामुत्पत्तिक्षेत्रमिष्यते ।।

तथा —

धर्माधर्मान्तरे चित्तं रुद्धं यस्य तदा तु सः[6] ।
यद्वक्ति स भवेन्मन्त्रः किं पुनर्मातृकोत्थितः ।।

इति ।।२३-२४-२५।।

अत एव—

**तदाक्रम्य बलं मन्त्राः सर्वज्ञबलशालिनः ।**
**प्रवर्तन्तेऽधिकाराय करणानीव देहिनः[7] ।।२६।।**

तद्बलं निरावरणचिदुल्लासरूपं परशक्त्याख्यमाक्रम्याधिष्ठाय मन्त्राः बीज[8]-पिण्ड-पद-नामरूपा[9] मननत्राणधर्मिणः सहजनादशक्त्युद्बोधदीप्तत्वात् सर्वज्ञत्वादिना बलेन श्लाघायुक्ता मन्त्रिप्रयुक्ता अधिकारायानुग्रहादौ प्रवर्तन्ते । किमिव यथा शरीरिणः करचरणादीनि[10] करणानि । अनेन मन्त्रिणः [11]परतत्त्वावबोधा[12]न्मन्त्रेष्विच्छामात्रेण यथेष्टविनियोज्यत्वमुक्तम् । तदुक्तं त्रिकसारे—

विदिते तु परे[13] तत्त्वे वर्णातीते ह्यविग्रहे ।
किङ्करत्वं तु गच्छन्ति मन्त्रा मन्त्राधिपैः सह ।।

अन्यथा तु प्रयत्नप्रयुक्ता अपि ये[14] पूर्वोक्तसङ्कल्पत्वाद्यास्प[15]दचिच्छक्तिबला-

---

१. D1 सोमं S'1 सूर्यसोमयोः २. D1, S'1 omit daṇḍa ३. D1, D2 बोधा० ४. S'2 त्वं आत्र ५. D1, S'2, निलयश्च ६. P निरुद्धं यत्तदा तु सः ७. D1, S'1 देहिनाम् ८. D1 बीजं ९. S'1 पदमद्रूपा १०. D1 श्रवणादीनि D2, S'1 omits ०चरण० ११. P परत्व० १२. P, D2, S'1 ०मन्त्रिष्वि० १३. S'2 omits तु परे १४. D1, D2 ते १५. S'1 ०स्पन्द० ।

स्पर्शात् केवलवर्णरूपत्वान्मन्त्राः[१] पुत्रिकाकरण[२]वन्निष्फलचेष्टा भवन्ति। उक्तं च हंसपारमेश्वरे —

पशुभावे स्थिता मन्त्राः केवला वर्णरूपिणः।
सौषुम्णेऽध्वन्युच्चरिताः पतित्वं प्राप्नुवन्ति ते॥

यत[३] एष[४] शाक्तो मार्गोऽत्र च मन्त्राणां साफल्यम्। तदुक्तं तत्त्वरक्षाविधाने—

अशक्तत्वान्निष्क्रियत्वान्न पुंसि न परे पदे।
शक्तौ नियोजयेन्मन्त्रं जपस्तु सफलो भवेत्॥ इति।

श्रीवैहायस्यां च —

विषुवत्स्थं[५] जपं कुर्यान्नादोर्ध्वंध्वनिबोधितम्[६]।
मन्त्राक्षराणि मणिवच्छक्तौ प्रोतानि भावयेत्॥
तामेव च परे[७] व्योम्नि परमामृतबृंहिताम्।
दर्शयत्यात्मसद्भावमेवं मन्त्रो हृति विना॥ इति।

श्रीकालपरायाम् —

शब्दो नादात्मकस्तस्मात् प्रत्ययेनोपबृंहितः।
मन्त्रबोधस्वरूपस्थमभिन्नो बोधयत्यपि॥ इति।

अन्यच्च सङ्कर्षणसूत्रेषु —

स्वात्मैकनिष्ठं चिद्रूपं भावाभावपरिष्कृतम्।
स्वसंवेदनसंवेद्यं प्रकृत्यातीतगोचरम्॥
इयं योनिः स्मृता विप्र मन्त्राणां प्रत्ययात्मिका।
ते मन्त्रा वर्णरूपेण सबाह्याभ्यन्तरोदिताः॥
नैष्कालिकपदावस्थाः करणानीव देहिनाम्।
प्रयुक्ताः सर्वकालेषु[८] सिद्ध्यन्ते वीर्ययोगतः॥

एवं शुद्धबोधात्मकत्वेनान्तर्बाह्योदयादेकोऽपि जपो [९]लक्षसङ्ख्याकः। तदुक्तं जयायाम् —

एकस्य मन्त्रनाथस्याप्यन्तर्बाह्योदितस्य च।
यदैक्यं[१०] तं जपं विद्धि [११]लक्षसंख्याभिधं[१२] मुने॥ इति॥२६॥

---

१. S'1 ०यन्त्र० २. P, D1 ०करण ३. P, D1, D2 उ 3 ४. S'2 adds स ५. P, D2, S'1 विषुवत्के ६. D1 ०र्ध्वा ७ S'1 परमे ८. D1 ०कार्येषु ९. D1, D2 लक्ष्य० १०. S'1 यदेकं ११. D1 लक्ष्य० १२. P ०धिकं।

[1]अनया युक्त्या मन्त्रवीर्यमुक्तम्, [2]प्राक्चोदयोऽधुनास्तमयमाह—

**तत्रैव सम्प्रलीयन्ते शान्तरूपा निरञ्जनाः ।**
**सह साधकचित्तेन[3] तेनैते शिवधर्मिणः ॥ २७ ॥**

तत्रैव स्वस्वभावे शक्तिमत्येते[4] मन्त्राः साधकचित्तेन तत्प्रवृत्तिनिमित्तेन तदाधारभूतयेच्छया[5] सह सम्यक् प्रलीयन्ते अस्तं गच्छन्ति । यतस्ते तदनुगास्तच्छक्तिरूपाश्च । उक्तं च कालपरायाम्[6]—

परासक्षरतरोर्धातुर्नानाशक्तेर्विवर्तगाः[7] ।
शक्तयो वर्णदेहेषु वक्त्राद्वर्णत्वमागताः ॥ इति ।

किंभूताः कृतकृत्यत्वाच्छान्तरूपाः[8] । अत एव निरञ्जनाः[9] महाकालुष्यरहिताः । निरञ्जनतत्त्वानुप्राणनाद्वा । अनेनैव च हेतुना शिवधर्मिणः शिवस्येव धर्मा गुणा येषाम् । सर्वज्ञाः[10] सर्वकर्तार इत्यर्थः । एवमेष एव मन्त्रात्मा । तेषां चात एव शिवधर्मित्वं सिद्धमिति ॥२७॥

सह साधकचित्तेन लीयन्ते तत्र यत् स्मृतम् ।
शिवतात्मनि सर्वात्म्याच्चाहैतत्सोपपत्तिकम् ॥

**यस्मात् सर्वमयो जीवः सर्वभावसमुद्भवः[11]।**
**तत्संवेदनरूपेण तादात्म्यप्रतिपत्तितः ॥२८॥**

**तेन शब्दार्थचिन्तासु न साऽवस्थः न यः शिवः ।**
**भोक्तैव भोग्यभावेन सदा सर्वत्र संस्थितः ॥२९॥**

[12]यस्माज्जीव आत्मैव सर्वमयः सर्वात्मको विश्वरूपो[13] बोद्धृरूपत्वात् ।

उक्तं च—

यदैव विदितं विश्वं तदानीमेव चिन्मयम् ।
यन्नास्ति भागो वेद्योऽसौ नाथ यो वेदकाद्बहिः ॥

---

१. P, D1, D2, S'2 अनेन २. D1 प्रोक्तो० ३. D1 सहाराधक० ४. P D1, add daṇḍa ५. S'1 भूतेच्छया ६. S'1 adds कारायाय० ७. S'2 विवर्तते ८. D1 ०रूपा omits daṇḍa ९. D1 माया० १०. S'1 omits daṇḍa and सर्वज्ञाः ११. S'1 समुद्भवात् १२. D1, D2, add सन्दानितकम् S'2 adds सन्दानिकम् १३. S'1 ०रूपेः ।

वेद्यो वेदकतामाप्तो वेदकः संविदात्मताम् ।
संवित् त्वदात्मा चेत् सत्यं तदिदं त्वन्मयं जगत् ।। इति ।

श्रुतिश्च—

आत्मैवेदं जगत् सर्वं नेह नानास्ति किञ्चन ।

अन्यच्च । सर्वभावसमुद्भव इति विशेषणं हेतुगर्भम् । हेतुर्वाऽयं[१] समुद्भवादिति सर्वेषां भावानां समुद्भवो यस्मात् । [२]परादिवाग्रूपतया संविद्युपारोहेण हि तेषामुदयः सत्ता च । तदुक्तम्—

त्वत्कारणत्वं सर्वस्मिन्नपि ज्ञातं [३]त्वदन्वयात् ।
संवित्समन्विते विश्वे नाऽसंवित् कारणं भवेत् ।।
संविदायतनं[४] ज्ञातं तत सदाख्यां प्रपद्यते ।
तावतैव न लभ्या [५]स्यादनुपासितसंविदा ।। इति ।

अन्यच्च—

त्वदात्मकत्वं भावानां [६]विवदन्ते न केचन[७] ।
यत्प्रकाश्यदशां[८] यातो नाऽप्रकाशः प्रकाशते[९] ।। इति ।

तथा—

सृजन्[१०] वदन्[११] ज्ञापयंश्च त्रिधैकस्त्वं प्रकाशकः ।
व्यतिरिक्तः प्रकाशेभ्यो न यथाऽन्यप्रकाशकः[१२] ।।
न प्रकाशाः प्रकाशन्ते त्वत्प्रकाशोदयं विना । इति ।

पञ्चरात्रेऽपि—

न तत्रादित्यो भातीत्यादि ।

यावत्—

तस्य भासा सर्वमिदं विभातीति ।

[१३]सर्वमयत्वेऽस्य हेत्वन्तरमाह—तत्संवेदन इत्यादि । तदिति भावानां संवेद्यानां परामर्शः, तेषां संवेदनरूपेणानुभवद्वारेण यतस्तादात्म्यप्रतिपत्तिर्भावरूपतासम्प्राप्तिस्तदभेदसंवित्तिस्ततो[१४] हेतोः । उक्तं [१५]हि स्वात्मसप्तती—

१. D1 ०वीर्यं २. S'1, S'2 परावाग्रूप० ३. D1 तद० ४. D1, S'2 ०नुज्ञातं ५. S'1 सा ६. S'1 विविदन्ते ७. D1 न च ८. S'1, S'2 ०प्रकाश० ९. D1, S'1, प्रकाश्यते १०. S'1 तथाविदन् ११. D1 ०विदञ्ज्ञा० १२. P, D2, S'1, ०न्ये प्रकाशकाः १३. S'1 सर्वमत्वे १४. D1 ०समापत्ति० १५. D1, D2, S'2 ह्या० ।

यद्वद् वस्तु स्वभावेन ज्ञानेन विषयीकृतम् ।
[1]तद्वत्तादात्म्यमायाति जीवः सर्वमयो ह्यतः ।। इति ।

अन्यत् संवित्प्रकरणे—

यथाऽग्निना समाविष्टं सर्वं तद्रूपमीक्ष्यते ।
तथा ज्ञानसमाविष्टं सर्वं तद्रूपमीक्ष्यताम् ।। इति ।

[2]तथाऽऽगमरहस्ये —

आकारवर्ग उपरि प्रतिभासतेऽस्य
ज्ञानस्य सापि तव विश्वमयो विभूतिः ।
विश्वात्मकस्त्वमिति नाऽऽगमसिद्धमेतत्
किन्तु स्वसंविदितरूपतयापि सिद्धम् ।। इति ।

एवं संविदेव प्राणद्वारेण वाग्रूपतां धत्ते । तदुक्तम्—

स्थानेषु विवृते वायौ कृतवर्णपरिग्रहा ।
वैखरी वाक् प्रयोक्तॄणां प्राणवृत्तिनिबन्धना ।।
केवलं बुद्ध्युपादानात् क्रमरूपानुपातिनी ।
प्राणवृत्तिमतिक्रम्य मध्यमा वाक् प्रवर्तते ।।
अविभागा तु पश्यन्तो सर्वतः संहृतक्रमा[3] ।
स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनी ।। इति ।

तथा—

स्वयं रौति य एषोऽन्तर्निर्विशेषरवात्मकः[4] ।
स परः परमः[5] स्थायी नित्योदितनिजाकृतिः ।।
चिदिच्छाशक्तिसम्बुद्धः स्पन्द आत्मबलेरितः ।
सवितेव स तेजांसि विचिन्वन् हृदि राजते ।। इति ।

प्रत्यभिज्ञायां च —

चितिः प्रत्यवमर्शात्मा परावाक् [6]स्वरसोदिता ।
स्वातन्त्र्यमेतन्मुख्यं तदैश्वर्यं परमात्मनः ।।
सा स्फुरत्ता महासत्ता देशकालाविशेषिणी ।
सैषा सारतया[7] प्रोक्ता हृदयं परमेष्ठिनः ।। इति ।

---

१. D1, S'1, S'2 तत्तत्० २. S'1 तदा ३. D1, ०क्रमाः ४. ०नव० emended to ०रव० ५. S1, S'2 परपरमः ६. D1 त्व० ७. P, D2 धारतया ।

तस्यां [1]चान्तःसंजल्परूपायां द्वावपि शब्दार्थौ समं स्फुरतः। अत एव तयोरभेद एव विख्यातः। उक्तं [2]चेह[3]—

[4]यतः शब्दानुवेधेन न विना प्रत्ययोद्भवः।

वाक् च संविन्मूलेति [5]प्रागेवोक्तम्—संविन्मूलादित्यादि। तथाजातीयैः श्लोकैरन्यच्चोक्तम् –

यथा त्वया[5] जगद्विद्धं सर्वमेव निजात्मना।
तथा त्वयाऽनुविद्धेयं सर्वतो भाति भारती॥

योगिनाथेन चोक्तम्—

तस्मात् सर्वस्य सिद्धयर्थं भारती कारणं परे।
परेष्टव्या[6] [7]तदारोपाख्षणेनार्थनिश्चयात्॥
तस्या औन्मुख्यवृत्त्यैव सद्भावपरिकल्पना।
नहि तामन्तरेणैषा लभेताऽऽत्मानमम्बिके॥
सा च तस्यामवस्थायां स्वरूपज्योतिरिष्यते।
निर्विभागक्रमापेक्षा [8]योगिगम्यानुरूपिणी॥
तत औन्मुख्यतश्चिन्तामयी भवति वाक् शिवे।
विशिष्टशब्दविषयविवक्षास्फुरणात्मिका ॥
ततः शब्दात्मकत्वेन विवृत्तार्थमयी भवेत्।
तदात्मतामन्तरेण यस्मान्नार्थावधारणम्[9]॥

एवं संवित्स्वरूपस्य सर्वप्रकाशकस्य प्रभैव[10] प्रकाशनशक्तिर्या वागन्तःसञ्जल्परूपा वर्ण-पद-वाक्य-जीवितभूता[11] सैव पदार्थरूपतया बहिर्भवतीति स्वानुभव-[12]प्रसिद्धमेव प्रबुद्धानाम्। उक्तं च—

चिदात्मैव हि देवोऽन्तःस्थितमिच्छावशाद् बहिः।
योगीव निरुपादानमर्थजातं प्रकाशयेत्॥
स्वामिनश्चात्मसंस्थस्य भावजातस्य भासनम्।
अस्त्येव न विना तस्मादिच्छामर्शः प्रवर्तते॥

---

१. D1 शान्तः २. D1 च ३. D1 adds इह ४. S'1 प्रागो० ५. P तया D1, D2 तथा ६. D1 पर्ये० ७. P रूपान्वेषणेन० D1, ०ारोपाद्दूषणेन० ८. S1 adds सापेक्षा ९. S'1 ०र्थावरणम् १०. D1 प्रभवे S'1 प्रभाव P प्रभेव emended to प्रभैव ११. P, D2 ०जीव० १२. D1 ०प्र० omitted।

अन्यच्चोक्तम्—

यत्किञ्चिदाभाति बहिस्तदीश नूनं तवास्त्येव समस्तमन्तः ।
निमीलिताक्षा हृदि लक्षयेयुस्तथैव सर्वं कथमन्यथा तत् ॥

इत्थं स्वभाव एव यतः सर्वात्मस्थेन तथाविधेन सर्वात्मकेन स्वभावेन हेतुना शब्दार्थयोश्चिन्तासु मध्याद्विषये[1] वा न सा काचिदवस्थास्ति या न शिवस्वभावमभिव्यञ्जयति, या न [2]चित्स्वरूपेत्यर्थः । संवित्स्त्रीकरणैक्यात्[3] यतः सर्वस्यास्तित्वम् । तदुक्तम्[4]—

येन येन विभिद्यन्ते हेतुना भावनिम्नगाः ।
तेन तेनैक्यमायान्ति [5]बोधोदधिसमागताः ॥

प्रागुक्तं च—

शरीरजो वा शाब्दो वा मानसो वा समुद्गतः ।
व्यवहारोऽप्यसौ नास्ति यत्र त्वं नाथ नाग्रगः ॥ इति ।

अतश्च भोक्तैवानुभवितैव भोग्यभावेनानुभाव्यतया सदा सर्वत्र संस्थितो न त्वन्यद्भोग्यमस्ति । तथा च श्रुतिः—

अहमन्नमहमन्नमहमन्नम् ।
अहमन्नादोऽहमन्नादोऽहमन्नादः ॥

ग्रन्थकृता तत्त्वविचारेऽप्युक्तम्—

स्वस्वभावस्थिता भावाः संबध्यन्ते परस्परम् ।
भोग्यभोक्तृत्वभावेन न कदाचित् स्वभावतः ॥
द्रष्टाऽनुभविता स्मर्ता[6] ग्राहको भोक्तृवेदकः ।
कर्तोपलब्धा संवेत्ता ज्ञातेति [7]ज्ञानसंज्ञकाः ॥ इति ।

तेन ज्ञानमेव ज्ञेयरूपतया प्रथते[8] इत्यर्थः । उक्तं च—

भोक्तुर्विभोर्ये भवतो विभिन्नः स दृश्यते मुग्धतया स्व आत्मा ।
ते भोग्यभूताः पशुवत् परेषां भोगाय भूयोऽत्र भवे भ्रमन्ति ॥
भवं भवद्वै भवभूतमेव विभावयन्तो भगवन् भवेयुः ।
भवद्वदेव प्रभुभावभाजो विश्वं वशे वर्तयितुं समर्थाः ॥ इति

ज्ञानसम्बोधेऽपि—

ज्ञाता ज्ञेयं ज्ञानमिति ज्ञानस्यैव त्रिधा स्थितिः ।

---

१. P, D2 मध्यावि० २. D1 ०रूपा ३. D1, S'2 ०कारेण० ४. D1 उक्तम् । ५. D1 ०ोदय० ६. D2 स्सत्ता ७. D1०संज्ञिकाः ८. D1 प्रथम० ।

ब्रह्मार्पणं ब्रह्महविरित्यत्रोक्तं तदेव[1] यत्।।

मयैव चोक्तं क्वाऽपि—

द्रष्टैवाऽस्ति न दृश्यमेतद्बुधैरध्यात्मना ज्ञायते
आदर्शप्रतिबिम्बवज्जगदिदं भिन्नं द्विधा भाति यत्।
सत्तां यान्ति घटादयो बहिरमी [2]बोधानुवेधात् सदा
ज्ञानाद्वैतमतः स्वतोऽस्ति न पुनर्ज्ञेयस्य सत्ता क्वचित्।। इति।

तथात्मसप्ततौ—

यदिदं दृश्यते किञ्चिद्दर्शनात्तन्न भिद्यते।
दर्शनं द्रष्टृतो नान्यद् द्रष्टैव हि ततो जगत्।। इति।

सङ्कर्षणसूत्रेष्वपि—

येनेदं[3] दृश्यते विश्वं द्रष्टा सर्वस्य यः सदा।
दृश्यश्चराचरत्वे यः स विष्णुरिति गीयते।। इति।

जाबालिसूत्रेष्वपि—

द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धाऽपरिलुप्तचैतन्यस्वभावो जगदुत्पत्ति-स्थिति-लयैकहेतुर्भगवान् वासुदेव आत्मेति।

पञ्चरात्रोपनिषदि च—

"ज्ञाता च ज्ञेयं च वक्ता च वाच्यं च भोक्ता च भोग्यं[4] च"। इत्यादि।

तथाऽत्रैव—"सर्वान्तरं[5] सर्वबाह्यं स्वयंज्योतिः स्वयंसम्बोध्यं स्वयम्भूरिति च" इति।

श्रुतिरपि—

स एव ज्ञाता तज्ज्ञानमिति।

२८-२९।।

अत्रैव प्रशंसाद्वारेण स्वीकरणोपायं[6] प्राह—

**इति वा यस्य संवित्तिः क्रीडात्वेनाखिलं जगत्।**
**स पश्यन् सततं[7] युक्तो जीवन्मुक्तो न संशयः।।३०।।**

---

१. D1 तदैव २. D1 ०बोधात् ३. S'1 यदिदं ४. D1, S'2 भोज्यं ५. S'1 adds सर्वान्तरं ६. S'2 ०पायमाह ७. D2, S'2 सवर्तो।

वाशब्दः 'स्वार्थेऽत्र[२]। किं बहुना, इत्येवं चोक्तप्रकाररूपा यस्य संवित्तिः संवेदनं ज्ञानं यथा मन्मयमेव सर्वं सोऽखिलं समग्रं जगत् क्रीडारामतया पश्यन् विभावयन्नित्ययुक्तत्वाच्च[३] बन्धकारणस्याज्ञानस्य क्षयात् प्रबोधाप्तौ जीवन्नेवेश्वरवन्मुक्तो नाऽत्र संशयः।

उपपत्त्युपलब्धिभ्यां सिद्धत्वाद् भ्रान्तिरत्र नो।

उक्तं च —

सम्यक् [४]स्वबोधविश्रान्तौ[५] योऽलुप्तानुभवः स्थितः।
विषयानपि सोऽश्नन् स्याज्जीवन्मुक्तस्तु तत्त्ववित् ॥ इति।

ये त्वाहुः — विनोत्क्रान्तिं कुतो मोक्षः[६]। तन्निरासायाह —

विना स्वभावानुभवेन पुंसः कैवल्यमुत्क्रान्तिबलाद्यदि स्यात्।
अत्राऽपि पक्षे ननु मोक्ष[७]भागुद्बन्धनं यः कुरुते प्रमूढः ॥

तथा—

विदेहा अपि बद्धयन्ते[८] प्रलये गुणवासिताः।
शरीरिणोऽपि मुच्यन्ते विशुद्धज्ञानसंश्रयात् ॥ इति ॥

ज्ञानगर्भेऽपि—

मयि स्थितमिदं जगत् सकलमेव सर्वत्र वा
स्थितोऽहमिति [९]धारणाद्वितयभावनावेशतः।
[१०]जगत्त्रितयनाथ तै [११]र्नातिचिरेण सम्प्राप्यते
नृभिस्तव [१२]सपर्यया दलितकिल्बिषोपप्लवैः ॥

गीतास्वपि—

यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति।
तस्याऽहं [१३]न प्रणश्यामि स च मे न प्रणश्यति ॥

पञ्चरात्रेऽपि—

---

१. D1, S'2 ०दश्चार्थे० २. S', omits ०त्र ३. S'1 adds युक्त० ४. D1 त्व० ५. S'1 राम्यक्ते च विश्रान्तौ व विश्रान्तौ ६. D1, S'2 स्थितिः P adds इति ७. भाक्त उद्बन्धनं emended ( भागुद्बन्धनं ) ८. P, S'2 बुद्धयन्ते ९. D1 धारणात १०. D1 ०द्वि० ११. तानतिचिरेण emended to तैर्नातिचिरेण १२. D1 सपर्याया १३. S'1 omits न।

प्रज्ञाप्रासादमारुह्य 'अशोच्योऽशोचतो[2] जनान्[3] ।
भूमिष्ठानिव शैलस्थः सर्वान् प्राज्ञोऽनुपश्यति ॥

अत्र च नित्योद्युक्तरूपत्वमेवोपायो युक्त्या ध्वनितः । प्राक् चोक्तं हि—अतः सततमुद्युक्त इत्यादि ॥३०॥

[4]अथ प्रागुक्तस्य मन्त्रात्मनो युक्त्यन्तरोदयवर्णनद्वारेण निगमनं करोति—

**अयमेवोदयस्तस्य ध्येयस्य ध्यायिचेतसि ।**
**तदात्मतासमापत्तिमिच्छतः[7] साधकस्य या[8] ॥३१॥**

अयमेव तस्य पूर्वोक्तस्य ध्येयस्य मन्त्रात्मनो ध्यायिचेतस्युदयः समा°-पत्तिमेकीभावं मन्त्रात्मतापत्तिमिच्छतो गृह्णतः साधकस्य ध्यायिनो या[8] तदात्मता[9] [10]ध्येयस्वरूपापत्तिरित्यर्थः । उक्तं हि विश्वसंहितायाम्—

ध्येये [11]चित्तं यदा लीनं तदा ध्यानमुदाहृतम् ।
ध्येयः प्रत्यक्षतां याति ध्याता तन्मयतां व्रजेत् ॥

[12]ऋच्छतस्त्विति पाठाद्वा ध्येयं चिन्तयतोऽत्र या ।
तदात्मतासमापत्तिरैक्यं तस्योदयः स तु ॥

ग्रन्थकृतस्तु द्वयमप्याशयः सहते । यतो [13]मन्त्रोच्चारणेच्छया मन्त्रदेवतया सह यत्तादात्म्यं योऽन्तःसंवेदनद्वारेण तदात्मग्रहो मन्त्रन्यासात्मकः स एवास्योदय आविर्भाव इति ॥३१॥

अस्यैव [14]व्याप्तिफलमाह—

**इयमेवाऽमृतप्रा[15]प्तिरयमेवाऽऽत्मनो ग्रहः ।**
**इयं निर्वाणदीक्षा च शिवसद्भावदायिनी ॥३२॥**

येयं[16] स्वरूपसंवित्तिः साऽमृताप्तिरिहात्मनः ।
जरामरणविच्छेदाद् पुनर्भवता न तु ॥

---

१. अशोच्यः शोचतो emended ( अशोच्योऽशोचतो ) २. D2 शोचते ३. D1 जनात् ४. D1 अत्र S'1 अस्य ५. S'1 ०रि० ६. P, D2 वा ७. S'1 मम० ८. P, D2 वा ९. P, D2 तदात्मतया १०. S'1 adds या ११. D1 चित्रं १२. S'1 इच्छता स्तुति S'2 इच्छतः स्तुति १३. D1, D2 मन्त्रश्चारे० १४. S'2 ०म्नि चाह १५. D1 ०प्राति० १६. P adds उक्तं च ।

दुग्धाब्ध्युद्गतस्यायमेव[१] चात्मनोऽनुग्रहः स्वतः ।
निर्वाणदीक्षा तच्चेयं परमात्मनियोजिका ।। इति ।

उक्तं च मोक्षधर्मेषु—

हित्वा तु सर्वसङ्कल्पान् सत्त्वे चित्तं निवेशयेत् ।
सत्त्वे चित्तं यदा लीनं ततः[२] कालञ्जयो[३] भवेत् ।।इति ।

आत्मसम्बोधे च[४]—

भवेद्भवानामभवाय नूनं स्वभावसंविद्विदितैव पुंसाम् ।
[५]अमर्त्यतां मर्त्यजने करोति सकृत्सुधाप्राशनमात्रमेव ।।इति ।

दीक्षार्थोऽयम्—

ददाति ज्ञानसद्भावं क्षपयत्यखिलं मलम् ।
बोधानुवेधाद्दीक्षोक्ता दानक्षपणधर्मिणी ।।

इति ।।३२।।

स्पन्दतत्त्वोदयं प्रोच्याकृत्रिमं तत्र एव च ।
मन्त्रोदयं च तद्वीर्यं तद्विभूतीरथाऽऽह तु ।।

यथोक्तस्य[६] जाग्रत्येव निजभावाप्त्या[७] स्वातन्त्र्यं तथा स्वप्नेऽप्यस्तीति वक्तुमाह—

**यथेच्छाभ्यर्थितो धाता [८]जाग्रत्यर्थान् हृदि स्थितान् ।**
**सोमसूर्योदयं कृत्वा सम्पादयति देहिनः ।।३३।।**

**तथा स्वप्नेऽप्यभीष्टार्थान् प्रणयस्यानतिक्रमात् ।**
**नित्यं स्फुटतरं मध्ये स्थितोऽवश्यं[९] प्रकाशयेत् ।।३४।।**

यथा जाग्रति जाग्रदवस्थायां धाता स्रष्टाऽऽत्मस्वभाव इच्छया दिदृक्षात्मिकयाऽभ्यर्थितो याचितः सन् देहिनः पुंसो हृदि स्थितानभिनतानर्थान्[१०] पदार्थान् सम्पादयति प्रकाशयति । स्वबलावष्टम्भात् । किं कृत्वा सोमसूर्ययोरपानप्राणयोश्चक्षुषोश्चोदयं

१. D1 वा २. D1 तदा ३. D1, S'2 कालजयो ४. D1 ०पि ५. D1 अमर्त्यंता ६. D1 S'2 ०क्तमस्य ७. D1 ०भावात्था S'1 ०भावास्वातन्त्रं ८. D1 जाग्रतो ९. P, D2, S'1 स्थितवद् यं १०. P, D2,S'2 ०थात् ।

कृत्वा चक्षुरादिष्व[1]वधानेनेत्यर्थः । एतदुक्तं भवति—अनेकार्थसन्निधानेऽपि[2] गणिका[3]-नटमल्लप्रेक्षकादिषु मध्यादयदेव[4] वस्त्वभिमतं तदेव यथा पश्यति । स्वरूपानुप्रवेशात् । तथा स्वप्नेऽप्यभीष्टानेवार्थान् मध्ये हृदि स्वस्वभावे स्थितः सन् स्फुटतरं कृत्वा नित्यं[5] सदैव प्रकाशयेद् दर्शयति । कुतः प्रणयस्येच्छाभ्यर्थनाया अनतिक्रमात् त्यागात् ।

मुक्त्वा दृढामभीष्टेच्छां नाऽन्यवृत्तिर्यदा भवेदिति ।

एतदुक्तम्—यदीच्छा तदनुगैव भवेन्न स्वातन्त्र्येण प्रभवति[6] तदैतत्स्यात् तां [7]चासौ [8]नाप्यतिक्रामति । उक्तं च[9] रहस्यस्तोत्रे—

विस्मृतार्थमभियुज्यधीर्यथा त्वामशेषविदमाशु शंसति[10] ।
यद्यदित्थमनयाऽर्थ्यते रसात् स्वप्नगोऽपि न विलङ्घयिष्यसि[11] ॥ इति ।

सिद्धोक्तं च—

चिद्व्योम्निस्थोऽनुसन्धत्ते [12]यत्तत्पश्यत्यखण्डितमिति ।

ज्योतिःशास्त्रे[13]ऽपि—

येन येनेन्द्रियार्थेन विद्धः स्वपिति मानवः ।
तस्य तस्येन्द्रियार्थस्य सुप्तः कर्माणि पश्यति ॥

इति ॥ ३३-३४ ॥

एवं स्वप्नस्वातन्त्र्यवर्णनद्वारेण[14] युक्त्या सौषुप्ततमोवरणनिर्भेद उक्तः । इत्थं[15] स्वरूपस्थस्यैव जाग्रत्स्वप्नादौ स्वातन्त्र्यं न त्वन्यथेत्यभिधातुमाह—

**अन्यथा तु स्वतन्त्रा स्यात् सृष्टिस्तद्धर्मकत्वतः ।**
**सततं लौकिकस्येव जाग्रत्स्वप्नपदद्वये ॥३५॥**

अन्यथा पुनः स्वरूपस्थित्याभावे [16]चित्तस्य चञ्चलत्वात् स्वप्नादौ सृष्टिरिच्छारूपा स्वतन्त्रा स्यात् । स्वप्नादिप्रसरोऽसमञ्जसरूपो भवेदित्यर्थः । कुतस्तद्धर्मकत्वात्[17] सृष्टिस्वभावत्वात् । यतस्तत्त्वमिच्छाख्यप्रसवधर्मि नित्यम् । कस्येव । यथा लौकिकस्याप्रबुद्धमतेर्जाग्रत्स्वप्नपदद्वये सततं सर्वकालं सृष्टिरिच्छैव स्वतन्त्रा ।

---

१. D1 •दिष्वेव• २. S'1 adds गुणिकान् तथा स्वप्नेऽप्यीष्टार्थान् प्रणयस्यानतिक्रमात् । नित्यं स्फुटतरं स्वप्ने स्थितोऽवश्यं प्रकाशयेत् । ३. S'1 omits गणिका• ४. D1, S'1 omit एव ५. S'1 omits नित्यं ६. D1 प्रभेवति ७ S'2 तमासौ S'1 तं चासौ ८. D1, S'2, नास्या• ९. S'1 omits च १०. D1 षां ११. P D2 विलङ्घयिष्यति १२. S'1, S'2 omit तत् १३. S'1, S'2 omit ज्योतिःशास्त्रेऽपि १४. D1 द्वार १५. P अथ १६. D1 चित्रस्य १७. D1 •स्तद्धर्मकत्वतः ।

न त्वसौ ह्यप्रबुद्धतया। साऽस्य सहस्रशः [1]सम्बद्धाऽसम्बद्धविकल्परूपैव भवेदवस्थाद्वितयेऽपीति यावत्॥३५॥

एवमात्मनो विभूतिषु स्वातन्त्र्याख्यां[2] युक्तिमुक्त्वाथेदानीं ज्ञत्वकार्यसामर्थ्याख्या या[3] तां तत्र कथयति। सूक्ष्मव्यवहितादौ [4]ज्ञत्वोपायं तावत्कारिकाद्वयेन प्राह—

**यथा ह्यर्थोऽस्फुटो दृष्टः सावधानेऽपि चेतसि।**
**भूयः स्फुटतरो भाति स्वबलोद्योगभावितः॥३६॥**
**तथा[5] यत् परमार्थेन येन यत्र [6]यदा स्थितम्।**
**तत्तथा बलमाक्रम्य नचिरात् सम्प्रवर्तते॥३७॥**

यथा [7]दूरस्थितः कश्चिदर्थं पदार्थो घटपटादिवस्तु[8] विशेषोऽस्फुटः संदिग्धो दृष्टः सावधानेऽप्यन्यव्यावृत्तेऽप्येकाग्रेऽपि चेतसि सति हि यस्मात् स[9] एवार्थो भूयः पुनः स्वबलोद्योगेनात्मबप्रयत्नविशेषेण भावितो विचारिता [10]सन्स्फुटतरो भाति निःसन्दिग्धः प्रकाशतेऽवभासते।

तस्मात्तथा यद्वस्तु येन रूपेण यत्र यस्मिन् काले स्थितं तद्वस्तु तथा तेनैव प्रकारेण [11]प्रयत्नविशेषेण स्वबलं[12] स्वस्वरूपं[13] [14]विकस्वरमाक्रम्या[15]ऽऽश्रित्याऽ[16]वष्टम्याभ्यासान्नचिरात् त्वरितं सम्प्रतंते सम्यक प्रतिभाति निरावरणस्वरूपत्वात्।

प्रागुक्तं हि—

अपि त्वात्मबलस्पर्शात् पुरुषस्तत्समो[17] भवेत्।

तत्त्वयुक्तौ च—

विषयाधिपतिर्यो हि येन जानाति पार्वति।
तस्य यो वेत्ति तत्त्वेन तेन ज्ञातं चराचरम्॥

तेनाऽतीताऽनागतज्ञानं परिमितविषयं न किञ्चिदाश्चर्यम्॥३६-३७॥

एवं [18]ज्ञत्वमुक्त्वाऽधुना [19]कार्यकर्तृत्वसामर्थ्ये[20] क्षुज्जयाय चोपायान्तरमाह—

---

१. D1 सम्बुद्धसम्बुद्ध० २. S'1 S'2 ०ख्यायां ३. D1 ख्ययोस्तां D2 ०ख्यया S'1 यो सा S'2 ०ख्यो यस्तां ४. D1 ज्ञानो० ५. D1 एवं ६. D1, S'1 यथा ७. D2 यथाभ्यास्थितः ८. S'1 omits वस्तु ९. S'2 omits स १०. P, D2, S'1 स ११. D1 प्रयत्नेन १२. D1 omits स्वबलं १३. D1 स्वस्वरूपेण १४. D1 विकल्प० १५. S'1 S'2 omit ०ाक्रम्या० १६. D1 ०वष्टं omits अभ्या० १७. D1 स्तमसो १८. S'1 ज्ञत्वाधुना १९. D1 कर्तृत्वे २०. S'1 ०ध्य०।

**दुर्बलोऽपि तदाक्रम्य यतः कार्ये प्रवर्तते ।**
**आच्छादयेद् बुभुक्षां च तथा [1]योऽतिबुभुक्षितः ।।३८।।**

दुर्बलः क्षीणधातुरशक्तः कृशोऽपि तद् बलमुत्साहलक्षण[2]मुद्योगरूपमा[3]क्रम्याऽधिष्ठाय स्वीकृत्य यतः कार्ये प्रवर्तते यस्माद् व्यापारं सम्पादयति । अतिकृशस्याप्युद्योगबलावलम्बनात् समरादौ शक्तिदर्शनात् । एतदुक्तं भवति—यथा कश्चिदसमर्थोऽपि व्यायामा[4]भ्यासान्महतीं शक्तिं प्राप्नोत्युद्योगबलेन तथा[5] योऽतिबुभुक्षितः क्षुधार्तः सोऽपि तेनैव [6]स्वस्वभावानुशीलनेन[7] बुभुक्षां [8]भोक्तुमिच्छामप्याच्छादयेत् क्षुधं [9]शमयति । प्रोक्तं च पतञ्जलिना —

कण्ठकूपे क्षुत्पिपासानिवृत्तिः । तथा—

बलेषु हस्तिबलादीनि ।

बुभुक्षाशब्दोऽत्रोपलक्षणार्थम् । तेन क्षुत्तृषौ[10] शोकमोहौ जरामृत्यू चेति षडूर्मयोऽपि नश्यन्तीत्यर्थः ।।३८।।

एवं न केवलमस्मिन्नेव शरीरे तस्य सर्वज्ञतादयः सन्ति, यावत्सर्वत्रापीत्युपायद्वारेणाऽऽह –

**अनेनाधिष्ठिते देहे यथा सर्वज्ञतादयः ।**
**तथा स्वात्मन्यधिष्ठानात् सर्वत्रैवं भविष्यति ।।३९।।**

अनेन प्रागुक्तेनात्मस्वभावेनाऽस्मिन्[11] देहेऽधिष्ठिते [12]व्याप्तेऽन्वीक्षिते सति यथा सर्वज्ञतादयो गुणा विद्यन्ते । यस्मादत्र स्वल्पयूकादिभक्षणाद्यपि[13] क्षिप्रमेव जानाति । उक्तं च ज्ञानसम्बोधे—

> [14]सर्वः स एव व्यापित्वाद् ज्ञः स एव स्वभावतः ।
> सर्वज्ञश्चेति सर्वज्ञः पुमानेव निरुच्यते[15] ।।

अन्यच्च —

> सर्वज्ञः सर्वदैव त्वं [16]सर्वस्य हृदये न चेत् ।
> केनाऽन्यथाऽस्य सम्भाव्या नष्टार्थविषया स्मृतिः ।।

---

१. D1 यौ २. D1 adds ॰मुद्योगलक्षणं॰ ३. S'1 ॰क्रमम॰ ४. D1 ॰सा॰ ५. S'1 यथा ६. D1, D2 omit स्व॰ ७. D1 ॰शीलेन ८. S'1 भुक्त॰ ९. D1 शमयेत् १०. D1, S'1, ॰तृषा ११. D1 omits ॰स्मिन् १२. P, D2 प्राप्ते १३. P, D2 दपि १४. D1 S'2 सर्व १५. P, D2, S'2 निरुद्धयते १६. S'1 adds सर्व ।

[1]तदहर्जातबालैश्च स्तनपानं क्व शिक्षितम् ।
प्राणिभिर्वाप्सु तरणमेतत् सर्वज्ञचेष्टितम् ॥

अन्यच्च—

भक्ष्यं स्यात्किमभक्ष्यं वा स्वादस्वाद्विति निश्चये ।
मक्षिकाणां कुतः संवित् क्षौद्रसंचितिकर्मणि ॥
सर्वज्ञस्याप्यधिष्ठातुस्तद्विजृम्भितमन्यथा ।
कृमिमात्राल्पकायानां सम्भृतिर्विस्मयास्पदम् ॥
कतकस्य फलं [2]वारिप्रसादनविधित्सया ।
द्विपः क्षिपति तस्यैषा प्रज्ञा ह्यज्ञस्य किं पशोः ॥
गीताकर्णनवैदग्ध्यं मुग्धबुद्धेर्मृगस्य किम् ।
सम्भाव्यते हि येनाऽस्य रोमन्थविरता स्थितिः ॥
भक्षयिष्यति मामित्थमाखोर्विवरवर्तिनः ।
मार्जारं प्रति का शङ्का सर्वज्ञज्ञापनं विना ॥
भयात् कूर्मः स वार्यन्तः सर्वाण्यङ्गानि गूहते ।
दुर्भेदबुद्धिस्तत्रास्य विवेकविकलस्य किम् ॥
वीक्ष्याभ्यक्षीणपक्षाणां वैलक्षण्यमचेतनः ।
नृत्तमारभते बर्ही स्फुरितं तज्जगद्गुरोः ॥
अगाधजलमध्यस्थमत्स्यभक्षणलक्षणम् ।
केनोपदष्टिं तन्मद्गोरनुमानं विना कृतम् ॥
अशक्यशक्तिः कस्येयं सलिलात् पिबतः पयः ।
हंसस्य न पुनस्तस्य हृदयान्तरवर्तिनः ॥
प्रतिभातप्रभातस्य मन्दिरान्तरवर्तिनः[9] ।
कृकवाकोर्गिरः कस्मात् क्षेत्रज्ञव्यापिनं विना ॥
यासामाकलनोद्युक्ता कालवित्कलना ततः ।
प्रवर्तते दिनारम्भे निर्भ्रान्तिकृतसंविधिः ॥
शृङ्गदन्तनखादीनि प्राणिनामायुधानि यत् ।
परप्रहरणोद्रेके केनाऽऽख्यातान्यसंविदाम् ॥

---

१. S'1 ०हजात० २. P, S'2 ०प्रसाधन० ३. D1 भूयात् ४. S'1 कूर्मकवाज्ञन्तुस्स० ५. S'2 क ६. D1 वाट० ७. S'2 ०भेद्य० ८. D1 ०न्यक्षेपण० S'2 ०न्यक्षेपण
९. P, D2, S'1 omit this line ।

बलं तेजः करो सिंहो जानाति निजमूर्जितम् ।
को हेतुर्यात्रदन्तस्थप्रतिपत्तिर्न[1] सस्फुरा[2] ॥
अतिवृष्टेरनावृष्टेर्व्यञ्जकं चिह्नमिङ्गितैः ।
सूचयन्ति न तच्चित्रं पशवः पक्षिणोऽपि यत् ॥
कृतान्तकल्पैः सिंहाद्यैः प्रीतिः प्राणभृतां कुतः ।
विनैकस्य हृदिस्थस्य संवित्संवादसुस्थितिम्[3] ॥ इति ।

तेषां च प्रागुक्तयुक्त्या विशेषाभिव्यक्तिः[4]। तथा स्वात्मन्यधिष्ठानात् स्वरूपाच्यवनादेवं[5] सर्वत्र सर्वज्ञतादयो[6] भविष्यन्त्यभिव्यक्तिं यान्तीत्यर्थः । उक्तं च—

एको भावः सर्वभावस्वभावः[7] सर्वे[8] भावा ह्येकभावस्वभावाः[9] ।
एको भावस्तत्त्वतो येन दृष्टः सर्वे[10] भावास्तत्त्वतस्तेन दृष्टाः ॥
रहस्ययुक्तिरत्रेयं शरीरे यत्र यत्र च ।
संविदो दार्ढ्यलाभः स्यात्तत्र तत्र गुणोदयः ॥ इति ॥३९॥

अथैषां गुणानामाच्छादकमूलविच्छेदार्थमाह—

**ग्लानिर्विलुण्ठिका देहे तस्याश्चाऽज्ञानतः सृतिः ।**
**तदुन्मेषविलुप्तं चेत्[11] कुतः सा स्यादहेतुका ॥४०॥**

ग्लानिर्हर्षक्षतिरनुत्साहरूपा देहे किल विलुम्पिका विनाशिनी । तस्याश्च ग्लानेरज्ञानतः सृतिः सरणमुत्पत्तिः । तच्चाऽज्ञानमुन्मेषेण वक्ष्यमाणलक्षणेनाऽऽत्मस्वभावेन यदा विलुप्तं निर्णोदितं[12] नाशितं तदा कुतः सा ग्लानिरेव का स्यात्कारण रहिता भवेदित्यर्थः । अत एव च योगिनां जरारोगाद्यभावः शरीरदार्ढ्यं च भवेत् ॥४०॥

[13]अथोन्मेषस्य स्वरूपमाह—

**एकचिन्ताप्रसक्तस्य यतः स्यादपरोदयः ।**
**उन्मेषः स तु विज्ञेयः स्वयं तमुपलक्षयेत् ॥४१॥**

---

१. D1, D2, S'2 ०अन्तः० २. D1 सुस्फुरा ३. P, D2, S'1, S'2 ०सुस्थितम् ४. D1, S'1 omit daṇḍa ५. P adds daṇḍa ६. P1 D2 ०ज्ञसर्वंना० ७. D1, S'1 ०भावा ८. S'1 सर्वं ९. S'1 ०स्वभावः १०. S'1 भावस्त० ११. S'1 स्याद १२. S'1 omits नाशितं १३. S'1 अस्य० ।

एकस्यां चिन्तायां प्रसक्तस्यैकत्र विषये क्वचिद् व्यापृतचित्तस्य सतो यतो यस्मात् [1]स्वस्वभावादपरस्याश्चिन्ताया उदयोऽभिव्यक्तिर्भवेत् । झटिति यतोऽन्या चिन्तोत्पद्यते विस्मृतस्मरणादिका स चिन्तायाः कारणमुन्मेषो विज्ञेयः[2]। तं च पुनरुन्मेष स्वयमात्मनोपलक्षयेद्विजानीयात् । चिन्ताद्वयमध्ये व्यापकत्वेनाऽनुभूयमानतया स्वसंवेद्यत्वाद् बृहत्कुमारीसुखवदनुपदेश्य इत्यर्थः ॥४१॥

अस्य चानुशील्यमानस्य प्रत्ययानाह –

**अतो बिन्दुरतो नादो रूपमस्मादतो रसः ।**
**[3]प्रवर्तन्तेऽचिरेणैव क्षोभकत्वेन देहिनः ॥४२॥**

अतोऽस्मादुन्मेषादनुशील्यमानादचिरेणैव कालेन देहिनः पुंसि[4] बिन्द्वादयः प्रवर्तन्ते उत्पद्यन्ते । बिन्दुस्तेजोरूपो भ्रूमध्यादौ[5] । [6]नादोऽकृत्रिमोऽनाहतात्मकः शब्दब्रह्माख्यो दूराच्छ्रवणं च । रूपमन्धकारे दर्शनं देवतानां च[7] सूक्ष्मादिप्रदर्शनं च । रसो मुखेऽमृताऽऽस्वादः षड्रसानां च । कथमेते प्रवर्तन्ते क्षोभकत्वेन उत्कृष्टसिद्धिविघ्नकारित्वेन । तथा च पतञ्जलिः—

"ततः प्रातिभश्रावणवेदनाऽदर्शनाऽऽस्वादवार्ता जायन्ते । ते समाधावुपसर्गा व्युत्थाने सिद्धयः" इति ।

अन्यच्च अनेन युक्त्या सृष्ट्यादिक्रमो ध्वनितः । यतः प्रागुन्मेषात् सृष्टिरुक्ता । सा च कथम् ? अतोऽस्मदादौ बिन्दुरिच्छादृग्शक्तिप्रसररूपः[8]। ततो नादः शब्दात्मको वागाख्यः [9]क्रियाशक्तिरूपः । ततो रूपं [10]पदार्थदर्शनविचारस्वरूपम् । ततस्तत्रैव रसोऽभिलाष उपभोगरूपश्चेति । एष एवातिरहस्यक्रमा[11]र्थविदामुद्योगावभासचर्वणविला[12]पनरूपः क्रमचतुष्क[13]क्रमोऽत्रैव युक्त्यैवोक्तः—

न बाधते विशेषो हि प्रकृतं परिभाषया इति ।

तद्यदुक्तं स्वयं तमुपलक्षयेदिति ॥४२॥

तत्कथमित्यत्रोपायमाह—

---

१. D1 स्वभावाद० २. D1, S'1 omit daṇḍa ३. P, D2, S'1, S'2 प्रवर्तन्ते ४. D1 पुंसो ५. D2, S'1 omit daṇḍa ६. S'1 नाकृत्रिमो ७. D1 omits च ८. D1, S'1 ०रूपाः ९. D1 ०प्रसर० १०. S'1 adds पदरूप० ११. D1, S'1 omit ०मार्थ० १२. S'1 adds ०रूप० १३. P1 D2, S'1, S'2 ०चतुष्कोऽक्रमो० ।

दिदृक्षयेव सर्वार्थान् यदा व्याप्यावतिष्ठते ।
तदा किं बहुनोक्तेन स्वयमेवावभोत्स्यते[१] ॥४३॥

द्रष्टुमिच्छा दिदृक्षा [२]तदवस्थास्थ इव सर्वार्थान् सर्वभावान् व्याप्याधिष्ठाय यदाऽवतिष्ठते वर्तते तदा किं बहुनोक्तेनाधिककथनेन । स्वयमेवात्मनैव [३]तत्तत्स्वभावमवभोत्स्यतेऽवगम्यते ज्ञास्यतीत्यर्थः । अयमत्रोपदेशाशयः—यथा कुतूहलदिदृक्षुर्विकासवृत्त्यास्ते एवं यः सर्वभावौन्मुख्यरूपोद्यन्तृता[४]स्वरूपे तिष्ठति स [५]स्वभावं सर्वज्ञतादिगुणास्पदं[६] स्वयमाप्नोति । यतः प्रागुक्तम्—अतः सततमुद्युक्त इत्यादि । या चैषा स्थितिः सैव तत्त्वार्थचिन्तामणौ रहस्यमुद्रेत्युक्ता । मयोक्तं भोगमोक्षप्रदीपिकायाम्—

उद्यन्तृताबलेन तु विकासवृत्त्या स्वरूपगस्तिष्ठेत् ।
स्वयमुपसृतेन्द्रियार्थानश्नन्नानन्दभूमिगो योगी ॥
एषोच्छृङ्खलरूपा विकस्वरतरा प्रबुद्धबुद्धीनाम् ।
सिद्धाः स्थिता सदाऽस्यां ह्यानन्दरताः[७] परा च मुद्रैषा ॥

अन्यत्रोक्तं[८] च—

सर्वाः शक्तीश्चेतसा दर्शनाद्याः स्वे स्वे वेद्ये यौगपद्येन विष्वक् ।
क्षिप्त्वा मध्ये हाटकस्तम्भभूतस्तिष्ठन्विश्वाधार[९] एकोऽवभासि ॥

तथा—

स्वच्छन्दं वा यत्र तत्र[१०] व्रजन्तीर्वे[११]श्यास्त्रीवच्चञ्चला [१२]या दृगाद्याः ।
शक्तीः[१३] पश्यन्[१४] केवलं नानुगच्छेद्विश्वं बिभ्रद्भासि तस्य त्वमन्तः[१५] ॥
इति ॥४३॥

अस्यामेव स्थितौ[१६] युक्तिमाह—

प्रबुद्धः सर्वदा तिष्ठेज्ज्ञानेनालोक्य[१७] गोचरम् ।
एकत्राऽऽरोपयेत् सर्वं ततोऽन्येन न पीड्यते ॥४४॥

---

१. S'1 ०ावगम्यते २. P, D2 add तया ३. S'1 तत्तत्व० ४. P ०ोद्यन्त्रितः स्वरूपे ५. S'1, S'2 add स्वं ६. D1 ०स्पन्दं ७. D1 ०ानन्दतराः ८. D1 चोक्तं ९. D1 ०विश्वाधा S'1 ०स्तिष्ठेद्विष्ठेद्वि० १०. S'1 ताः स्वच्छन्दाः यत्र तत्र ११. P ०वेश० १२. D1, S'2 यो १३. S'1 शक्तिः १४. D1 पश्येत् १५. P, D2, S'2 ०न्यः १६. S'2 ०वस्थितौ १७. D1 S'2 ०ालोच्य ।

प्रबुद्धोऽसंकुचितशक्तिनिर्विकल्प[1] उद्योक्तृरूपतया सर्वकालं तिष्ठेद् वर्तेत। ज्ञानगोचरं[2] [3]विषयमालोक्य[4] परिच्छिद्य संविद्दीप्त्या ज्ञेयं विलाप्याऽविभागं नीत्वेत्यर्थः। मयैव चोक्तं भोगमोक्षप्रदीपिकायाम् —

> अथवाविभाग[5]बोधज्वलनेन विलाप्य वेद्यपीयूषम्।
> पीत्वा तृप्तो [6]विचरन्नीरोगो योऽचिरात् सदैकाकी॥
> एतत्क्रमार्थसारं परधाराभूमिका च शक्तीनाम्।
> तदनुज्ञयाऽत्र कथितं सच्छिष्य[7]विबोधनाय[8] मया[9]॥

[10]अतः सा निर्विभागा चित्[11]। उक्तं हि —

> देशकालक्रियाकाराः प्रसिद्धा भागहेतवः।
> तेन सन्ति पुनर्यस्य विभागस्तस्य किंकृतः॥

अन्यच्च—

> मनः सविषयं दाह्यं ज्ञानाग्निर्दर्शनैर्दहेत्।
> अन्तर्बहिर्मुख[12]श्चैवं समाधिरुपपद्यते॥

तथा—

> विज्ञानवाडवो दीप्तः स्वशक्त्या ज्ञेयतोयधीन्।
> अजस्रं ग्रसते नान्यस्तद्ग्रासे शक्तिमान् भवेत्॥
> नाऽप्राप्त्या पयसां तृष्णा प्राप्त्या वा भूयसामपि।
> यस्यास्ति कृतकृत्यत्वं कोऽप्यसौ वडवामुखम्॥ इति।

प्राक्चैतत्सोपपत्तिकं वितत्योक्तम्। यस्मात् सर्वमयो जीव इत्यादि। एवमेकत्र तत्त्वस्वभावे विद्यात्मके ज्ञानरूपे सर्वमारोपयेदैक्यं नयेत्। अत एव ततोऽन्येन वक्ष्यमाणेन कलासमूहेन शक्त्यात्मकेन विकल्परूपेण न पीड्यते न[13] बाध्यते न स्वरूपात् प्रच्याव्यत इत्यर्थः। उक्तं च—

> एकं व्यापि[14] व्योम कुड्यादियोगात् तस्मिन्[15] बाह्याऽभ्यन्तरत्वं तथा त्वाम्[16]।
> पश्यत्येकं ग्राहकग्राह्यरूपं व्याक्षिप्ताक्षेप्यक्ष[17]तस्त्वत्[18] समाधिः॥
> इति॥४८॥

एवं यः प्रबुद्धः पतिः सोऽन्येन न पीड्यते। अर्थाद्योऽप्रबुद्धः पशुः स हन्यते।

१. D1 ०विकल्प २. D1 ज्ञानेन ३. D1 विषयं गोचरम० ४. S'2 ०मालोच्य ५. P अथवा विभाग० ६, D1 विचरेन्न० ७. D1 ०निवोध० ८. S'1 adds च ९. P, D2, S'2 यथा १०. P, D2 यतः ११. P, omits चित् १२. D1 ०मुख १३. P omits न १४. P, D2, S'1 व्याप्ति १५. D1, S'2 योगात् त्वस्मिन् १६. P, D2 समाधिः १७. P, D2 omit ०क्ष० १८. S'1 ०कृतस्त्वत्स०।

स च[1] कथं किंलक्षणश्चेत्यु[2]च्यते—

**शब्दराशिसमुत्थस्य शक्तिवर्गस्य भोग्यताम्।**
**कलाविलुप्तविभवो गतः सन् स पशुः स्मृतः ॥४५॥**

शब्दानां राशिः शब्दराशिः वर्णसमूहो मातृका अकारादिक्षकारान्ता शब्दजननी। वर्णात्मकत्वा[3]च्छब्दानाम्। तत्समुत्थस्य कादिवर्गात्मकस्य[4] ब्राह्म्यादिशक्तिचक्रस्य कलाभिः ककाराद्यक्षरैर्विलुप्तविभवो हृतमहाव्याप्तिः [5]स्वभावात् प्रच्यावितोऽत एवास्य भोग्यतां गतः सन् पुरुषः पशुरुच्यते[6] अज्ञत्वात्। उक्तं चेश्वरप्रत्यभिज्ञायाम्—

स्वाङ्गरूपेषु भावेषु प्रमाता कथ्यते पतिः।[7]
मायातो[8] भेदिषु क्लेशं कर्मादिकलुषः पशुः॥

क्वापि च—

भेदग्रन्थिविभङ्गे[9] हि कर्मात्मैक्यं प्रपद्यते।
सोऽविज्ञातः पशुः प्रोक्तो विज्ञातः पतिरेव सः॥

इति ॥४५॥

अतश्च—

**परामृतरसापायस्तस्य यः प्रत्ययोद्भवः।**
**तेनाऽस्वतन्त्रतामेति स च तन्मात्रगोचरः ॥४६॥**

तस्य च पशोर्यः प्रत्ययोद्भवः श्रोत्रादिद्वारेण विषयदर्शनेन [10]स्मरणादिज्ञानोत्पत्तिः स एव परामृतरसात् [11]स्वरूपोदयादपायः प्रच्युतिः। यतस्तेन स पुमानस्वतन्त्रतां पारतन्त्र्यमसर्वगतत्वाद्यमेति प्राप्नोति। स च प्रत्ययोद्भवस्तन्मात्रगोचरः शब्दादिविषयविषयस्तदभिलाषात्मक इत्यर्थः ॥४६॥

अत एव च—

**स्वरूपावरणे चास्य शक्तयः सततोद्यताः[12]।**
**यतः शब्दानुवेधेन न विना प्रत्ययोद्भवः ॥४७॥**

---

१. S'1 सद २. D1, D2, S'2 ०चेत्यत्रो० ३. P, D2, S'1 ०च्छक्ती० ४. P, D1, D2 add daṇḍa ५. D1 स्वस्वभावात् ६. S'2 add ०पते० S' 1 reads [पशुः] प्रोक्तो विज्ञातः पतिरेवमुच्यते अज्ञत्वात्। ७. S'1 omits this line ८. S'1 प्रमायति S'2 प्रयातो ९. P, S'1 ०विभेदे १०. S'1, S'2 ०श्रवण० ११. D2, S'2 स्वस्वरूपो० १२. D1 सततोत्थिताः।

अस्य च पुंसः स्वरूपावरणे [1]स्वस्वभावाच्छादने शक्तयः पूर्वोक्ता ब्राह्म्याद्या शब्दरूपाः क्रियाशक्ति[2]द्वारेण सततमुद्यताः सदा सन्निहिता। पुंरूपग्लपनाय। यतः शब्दानुवेधेन वर्णानुगमेन[3] विना न प्रत्ययोद्भवो ज्ञानसंवेदनमस्ति। शब्दायत्तत्वात्पदार्थस्य वाच्यवाचकयोरन्योन्यद्योतकत्वाच्च। तथा चोक्तं वाक्यपदीये[4]—

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन दृश्यते ॥इति॥

प्राक्चोक्तं हि –

वागेवास्याः कारणं विश्ववृत्तेरित्यादि।

अन्यच्च —

वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती।
न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी ॥इति॥४७॥

अथास्या एव क्रियाशक्तेर्बन्धमोक्षहेतुतामाह—

**सेयं क्रियात्मिका शक्तिः शिवस्य पशुवर्तिनी।**
**बन्धयित्री स्वमार्गस्था ज्ञाता सिद्ध्युपपादिका ॥४८॥**

यैषा अज्ञानां बन्धयित्री[5]बन्धजननी[6]भगवत्[7] क्रियात्मिका क्रियास्वभावाऽशक्तिः[8] सैवेयं शिवस्य सुप्रबुद्धस्य पशुवर्तिनी पशुवद्यथेष्टविनियोज्यतया या वर्तते सा यथोक्ता। सा च स्वमार्गस्था मदीयेति ज्ञाता सिद्ध्युपपादिका परापरसिद्धिप्रदा भोगमोक्षावहेत्यर्थः। अर्थाच्च भिन्ना ज्ञाता बन्धदा भवति[9]। अथवेयं व्याख्या—सेयमित्याद्यन्य[10]स्तुल्यार्थः। स्वमार्गस्था स्वतन्त्रा अज्ञाता बन्धयित्री। ज्ञाता तु सिद्ध्युपपादिकेति। उक्तं चैतत्प्राक्—प्राणिनां पतनं येन इत्यादिना ॥४८॥

कथं त्वेषा बन्धहेतुतामापद्यत इति[11] स्फुटीकर्तुमाह[12]—

---

१. P omits स्व० २. D1 शब्द० ३. S'1, S'2 ०वगमेन ४. D1 ०प्रदीपे ५. D1 अज्ञानसंबन्धयित्री ६. S'1 ०जनकी ७. P भवेत्। अक्रिया० D2, S'1 भवदाक्रिया० ८. P, D2 शक्ता ९. D1, D2 add इति S'1 omits this sentance and the next १०. D1 ०र्थ ११. P तत् १२. S'1 adds सन्दानितकम्।

तन्मात्रोदयरूपेण मनोऽहम्बुद्धिवर्तिना[1] ।
पुर्यष्टकेन संरुद्धस्तदु[2]त्थप्रत्ययोद्भवम् ॥४९॥
भुङ्क्ते परवशो भोगं तद्भावात् संसरेदतः ।
संसृतिप्रलयस्याऽस्य[3] कारणं संप्रचक्ष्महे ॥५०॥

[4]पुर्यष्टकस्य किल द्वे रूपे स्तः—एकं सूक्ष्ममातिवाहिकाख्यं तन्मात्रमभिलापात्मकम्[5] द्वितीयं स्थूलं भौतिकं भोगाख्यम् । तत्र सूक्ष्मेण [6]पुर्यष्टकेन संरुद्धो बद्ध आवृतोऽतः एव परवशः सन् [7]तदुत्थप्रत्ययोद्भवं सुखदुःखसंवेदनरूपं[8] भोगं भुङ्क्ते अश्नाति । कीदृशम्[9] । तन्मात्राणां शब्दादीनामनुभवद्वारेण य उदयोऽभिव्यक्तिः स एव[10] रूपं यस्य तेन तथा मनोहङ्कारबुद्धिवर्तिना चान्तःकरणसंयुक्तेन । तस्य[11] च पुर्यष्टकस्य भावात्तद्वशाच्छरीरी संसरेत् संसारं याति । अत एवास्य संसृतिप्रलयस्य जननमरणप्रवाहस्यैतदेव कारणं हेतुं संप्रचक्ष्महे कथयामः ॥४९-५०॥

एवं बन्धनिमित्तमुपवर्ण्यास्योच्छेदो[12]पायमाह—

यदा त्वेकत्र [13]संरूढस्तदा तस्य लयोद्भवौ ।
नियच्छन् भोक्तृतामेति ततश्चक्रेश्वरो भवेत् ॥५१॥

एवम्—

बन्धमोक्षविचारेण प्रबोधाख्या यदा पुन इति ।

पुर्यष्टकद्वयमध्यादेकत्रैकस्मिन् पुर्यष्टके स्थूले सूक्ष्मे वा पतित्वेन संरूढो लीनचित्तस्तदा तस्य [14]तदुत्थप्रत्ययोद्भवस्य [15]शब्दार्थोर्लयोद्भवौ [16]प्रध्वंसप्रादुर्भावौ नियच्छन्[17] स्वेच्छया[18] कुर्वन् भोक्तृतामेति । प्रभुत्वं प्राप्नोति । भोग्यरूपात् पशुत्वान्मुच्यते इत्यर्थः । तदुक्तम्—

---

१. S2 वर्तिनः २. D ०स्तदुत्थं S'1 ०स्तदुक्तं ३. S'1 संसृतिः प्रत्ययस्य ४. D1, adds सन्दानितकम् ५. S'1, S'2 add daṇḍa ६. P पुर्यष्टके ७. D1 तदुत्थं S'1 तदुक्तं ८. S'1 ०स्वरूपं ९. D1 कीदृशेन १०. D1 ०क्तिस्तदेव ११. S'1 omits the words from तेन to तस्य १२. D1 D2 ०च्छेदा यो० १३. D1 adds व० १४. S'1 तदुरूप० १५. P, S'1 ०थौ १६. D1 omits प्र० १७. S'1 नियेच्छया १८. S'1 omits स्वेच्छया ।

पशूनां तु पतिर्भूत्वा पशूनां तु पतिर्भवेत् ।
पशुत्वान्मुच्यते सद्यो भूत्वा पशुपतेः पतिः ॥ इति ।

[1]स्वबोधोदयमञ्जर्यां च—

यद्यन्मनोहरं किञ्चिद[2]क्षिगोचरमागतम् ।
एकाग्रं भावयेत्तावद्यावल्लीनं निरोधकृत् ॥ इति ।

एवं सति स्वातन्त्र्याप्तेस्ततश्चक्रेश्वरः[3] शक्तिचक्रस्वामी सर्वज्ञतादियुतः [4]सर्वाधिपतिर्भवेदित्यर्थः ॥५१॥

एवमस्याद्यश्लोके शक्तिचक्रैश्वर्यं[5] यदुक्तं तदिहापि—

अथेत्थं ग्रन्थ[6]निष्पत्तेर्ग्रन्थकर्ता गुरोर्गिरम् ।
प्रहर्षवशतः स्तौति नीतिं शिष्यांश्च शिक्षयन् ॥

**अगाधसंशयाम्भोधिसमुत्तरणतारिणीम् ।**
**वन्दे विचित्रार्थपदां चित्रां तां गुरुभारतीम् ॥५२॥**

तामहं गुरुभारतीं वन्दे । कीदृशीम् । दुरवगाहसन्देहार्णवपारोत्तारिणीम् । अन्यच्च विचित्रोऽर्थोऽभिधेयो विचित्राणि पदानि शब्दा यस्याः सा यथोक्ता । अत एव चित्रामाश्चर्यभूतामाचार्यसरस्वतीं स्तौमि[7] । नहि गुरोर्गरीयानन्योऽस्ति । तदुक्तं जयायाम्—

यस्माद्देवो जगन्नाथः कृत्वा मर्त्यमयीं[8] तनुम् ।
मग्नानुद्धरते लोकान् कारुण्याच्छास्त्रपाणिना ॥ इति ।

नारदसंग्रहे च —

गुरवे दक्षिणां दद्यात् सर्वस्वं [9]स्वार्धमेव वा ।
सर्वस्वमथवाऽप्यल्पं संसारोच्छेदहेतवे ॥ इति ।

मयोक्तं क्वापि—

[10]भगवत्प्राप्तिकामो यस्तेनान्वेष्यो गुरुर्यतः ।
भगवान् ज्ञायते[11]शास्त्राच्छास्त्रं च ज्ञायते गुरोः ॥

---

१. D1 सुबोधमञ्जर्यां २. D1 ०क्ष० ३ S'1 ०स्ततः ४. S'1 सर्वाधिभवेदन्यर्थः ५. P, D2 S'2 ०र्यं ६. D1 निष्पति ७. D1 स्तौति ८. मन्त्रमयीं emended to मर्त्यमयीं ९. P, D2, S'1 S'2 सार्थमेव १०. D1 ०प्रीति ११. D1 omits ०च्छास्त्रं।

तद्बोधाद् ज्ञानविलयाज्ज्ञानाप्तौ प्राप्त एव सः ।
तस्माच्छास्त्रादीश्वराच्च[१] गरीयान्[२] गुरुरुच्यते ।। इति ।

पञ्चरात्रेऽपि—

यथा भगवत्येव[३] वक्तरि वृत्तिरिति ।।५२।।

अथाम्नायक्रमवर्णनद्वारेण संग्रहकृत्स्व[४]कीर्त्यर्थं श्लोकेन स्वनामोपबध्नाति[५]—

**वसुगुप्तादवाप्येदं[६] गुरोस्तत्त्वार्थदर्शिनः ।**
**रहस्यं श्लोकयामास सम्यक् श्रीभट्टकल्लटः ।।५३।।**

अस्यार्थः प्रारम्भ एवोक्त इति पुनर्नोच्यते। इदं च ब्रह्मविद्याबीजं [७]नाऽपरीक्ष्याऽस्थाने वपेत् । उक्तं ह्यनेनैवाऽन्यत्र —

गुणैरुपेताऽपि तु '[८]सिद्धविद्या कन्येव दत्ता गुणवर्जिताय[९]' ।
सम्भोगहीना विदधात्यकीर्तिं दातुर्यतस्तत्प्रगुणाय[१०] दद्यात् ।।

इति ।।५३।।

इत्यविद्यातमःस्थानां दर्शनाय प्रकाशिता ।
सता [११]सुपूर्णादिशेव शुद्धामलगुणोज्ज्वला[१२] ।।
वाग्लुण्ठनार्थमन्येषां विद्वन्मन्यतयाऽपि तु ।
शुद्धबोधोल्लासवशात् कृत्वा स्पन्दप्रदीपिका ।।
तस्मात् प्रोत्सार्य मात्सर्यमर्थमर्थं विचार्य च[१३] ।
आर्यैराश्चर्यभूताया न कार्योऽस्या अनादरः ।।

नारायणस्थानज उत्पलाख्यस्त्रिविक्रमाख्यस्य सुतोऽग्रजन्मा[१४] ।
यस्तेन सच्छिष्यहिताय[१५] दृब्धा[१६] व्याख्या मयैषा च तमोनुदे स्यात् ।।

---

१. D1 ०श्च २. D1 गरीन् ३. D1 येवं ४. P, D2 S'1 S'2 omits ०स्व० ५. D1 बध्नाति ६. S'1 ०प्येवं ७. S'1 omits ना० ८. S'1 सविद्या ९. S'1 ०बलिताय १०. D1 ०सगुणाय ११. सुपर्णा० emended to सुपूर्णा० १२. D1 ०वला: १३. S'1 विचारयेत् १४. D1 ०ग्र० १५. S'1 हिता १६. P1, D2 S'1 S'2 दृष्टा ।

गतिः स्खलन्ती न क्वचिद्यथा[1] निशि स्याद्दीपहस्तस्य तथा स न क्वचित् ।
स्खलत्यमार्गेऽपि[2] करेऽस्ति यस्य हि[3] प्रदीपिकेयं प्रगुणप्रकाशिका ।।

किं वा बहूक्तिभिरिमां तु सरस्वतीं मे
बोधद्रुमोत्तमसृतां परतीर्थयुक्ताम् ।
स्वच्छां विगाह्य विबुधत्वमुपैति[4] मर्त्यो-
ऽप्यत्यक्तदेह इह चित्रमतः परं किम् ।।

इत्याचार्यभगवदुत्पलविरचिता स्पन्दप्रदीपिका समाप्ता ।।

।। शुभं भूयात् ।।



१. S'1 omits words from गतिः to यथा २. S'1 omits ०पि
३. S'2 omits हि ४. D1 ०पैति ।